परस्तादर्वाक्प्रवृणीते । परस्ताद्ध्यर्वाच्यः प्रजाः प्रजायन्ते ज्यायसस्पतय उ चैवैतन्निह्नुत इदᳫं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्रस्तस्मात्परस्तादर्वाक्प्रवृणीते ॥ १० ॥

स आर्षेयमुक्त्वाह । ब्रह्मण्वदिति ब्रह्म ह्यग्निस्तस्मादाह ब्रह्मण्वदित्या च वक्षदिति तद्य एवैतद्देवता आवोढवा आह ता एवैतदाहा च वक्षदिति ॥ ११ ॥

ब्राह्मणा अस्य यज्ञस्य प्रावितार इति । ( त्ये ) एते वै ब्राह्मणा यज्ञस्य प्रावितारो येऽनूचाना एते ह्येनं तन्वत एत एनं जनयन्ति तद्वेभ्यो निह्नुते तस्मादाह ब्राह्मणा अस्य यज्ञस्य प्रावितार इति ॥ १२ ॥

---

परस्तादर्वाक् प्रवृणीते । परस्ताद्धि अर्वाच्यः प्रजाः प्रजायन्ते, ज्यायसस्पतय उ चैवैतन्निह्नुते । इदं हि-पितैवाग्रे, अथ पुत्रः, अथ पौत्रः । तस्मात्परस्तादर्वाक् प्रवृणीते ॥ १० ॥

स आर्षेयमुक्त्वा आह–' ब्रह्मण्वद् ' इति । ब्रह्म ह्यग्निः, तस्मादाह–ब्रह्मण्वदिति । 'आ च वक्षद्' इति । तद्या एवैतद् देवता आवोढवा आह ता एवैतदाह–आ च वक्षदिति ॥ ११ ॥

"ब्राह्मणा अस्य यज्ञस्य प्राविताराः"–इति । एते वै ब्राह्मणा यज्ञस्य प्रावितारो येऽनूचानाः ।

---

कस्मिन् तन्नवर्तु ' वृणीत ' करण कुर्यात् । " अप्रुनरप्रुवैत् " इति ( का० श्रौ० सू० ३. २९ ) नैमित्त् । तत्प्रयोजनमाह–ऋषिभ्यश्चेति । ' स ' यजमानस्यानशन् ' अप ' यजमान शारीरसुताध्ययन-सम्पत्ता हि महासामर्थ्यवानि येनेदमुनदमुवदिति पुरातनप्रसिद्धऋषिदृष्टत्वेन गम्यते, अतस्तेभ्योऽस्य यजमा-नस्य सामर्थ्यमावेदित भवति । अत्रान्वाख्याने दवनाभारमहान् तन्निमित्तान निह्नमि नमित्रेय ' ऋषिभ्यश्चैत-न्नाऽनिम्यश्च '–इत्युक्तम् ॥ ९ ॥

विहितमार्षेयवरणमवरोहेण कर्तव्यमिति विधत्ते–परस्तादर्वागित्यादिना । ज्यायसस्पतय–इति । ' स्वामन् ' इव पूर्वमित्यर्थ , तस्य पति तनोऽपि ज्येष्ठ पूर्वपुरुष । प्रत्येकविवक्षयैकवचनप्रयोग , य पूर्व-पूर्वस्मै–तस्मै तत्तन्नामग्रहणेन निह्नव कृतवान् भवतीत्यर्थ ॥

परस्मादर्वाग्वरणमुपपादयति–इदं हीति । पिता, पुत्र , पौत्र , इत्यनेनैव क्रमेणोत्पत्तिरिति यत, ' इद हि ' लोकसिद्धम्, अतस्तदनुसारेण आर्षे वरणेऽपि पूर्वपूर्वपुरुषमारभ्य अर्वाक्तनमेव युक्तमित्यर्थ । तथा च कात्यायन स्त्वाभिधानस्थये अवरोहक्रमेणैव वरणमाह–" भृगुवच्च्यवनवदप्नवानवदौर्ववज्जमदग्निवदित्यादिना " ॥ १० ॥

आर्षेयमिति । प्रवरशेषस्य प्रथमतया मन्त्रव्याचष्टे–ब्रह्मण्वदिति । ' ब्रह्म ' परिवृढ कर्म, । तत्साधकत्वाद् 'अग्नि ' अपि ' ब्रह्म ' स यथा आवहति, तद्वदित्यर्थ । आ च वक्षदिति । ' याश्च देवता ' आवोढुम् आह्वातुम् " अग्निमग्न आ वह "–इत्यादिना " आह ' होता, ' ता एव ' आवहत्विति ॥ ११ ॥

स मन्त्रवाक्यमाह–ब्राह्मणा इति । साङ्गवेदाध्यायिन ' अनूचाना ' ' ये ' सन्ति, त एवात्र

( त्य ) असौ मानुषऽइति । तदिमं मानुषं होतारं प्रवृणीतेऽहोता हेप पुराथैतर्हि होता ॥ १३ ॥

स प्रवृतो होता जपति । देवता ऽउपधावति यथानुपूर्व्या देवेभ्यो व्वषट्कुर्याद्यथानुपूर्व्या देवेभ्यो हव्यं व्वहेद्यथा न ह्वलेदेवं देवता ऽउपधावति ॥ १४ ॥

तत्र जपति । ( त्य ) एतत्त्वा देव सवितर्वृणत ऽइति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसवितास्मि ᳪ होत्रायेति तदग्नये चैवैतद्देवेभ्यश्च

एते होमं तन्वते, एत एनं जनयन्ति । तद्धु तेभ्यो निह्नुते । तस्मादाह–ब्राह्मणा अस्य यज्ञस्य प्राविताः इति ॥ १२ ॥

'असौ मानुषः' इति तदिमं मानुषं होतारं प्रवृणीते। अहोता हेप पुरा, अथैतर्हि होता ॥ १३ ॥

स्वस्त्ययनजपः ।

स प्रवृतो होता जपति, देवता उपधावति । यथानुपूर्व्या देवेभ्यो वषट्कुर्याद्, यथानुपूर्व्या देवेभ्यो हव्यं वहेद्, यथा न ह्वलेद्–एवं देवता उपधावति ॥ १४ ॥

तत्र जपति–" एतत्त्वा देव सवितर्वृणते "–इति । तत्सवितारं प्रसवायोपधावति । स हि

'ब्राह्मण '–शब्दाभिधेया ऋत्विजः; ते 'प्राविताराः' कर्तारः । अवतिरत्र क्रियावचनः । 'तन्वते '–इत्यस्य तात्पर्याभिधानं 'जनयन्ति ' इति । यस्मादेतद्ब्राह्मणपाठात् तेभ्यो निह्नवः कृतो भवति, तस्मादयं मन्त्रभागः पठनीय इत्यर्थः ॥ १२ ॥

आर्षेयवरणानन्तरं मानुषहोतृवरणं कर्तव्यम्, तत्र मन्त्रपाठ एव तद्वरणमित्याह–असाविति । 'तत्' तेन 'असौ '–इति मन्त्रपाठेन । असावित्यत्र होतुर्नाम प्रथमान्तं निर्दिशेत् । तथा च कात्यायनः–" असौ मानुष इति होतृनामग्रहणम् "–( का० श्रौ० सू० ३. ११. ३२ ) इति । 'अहोता '–इति च्छेदः । 'एतर्हि ' एतस्मिन् मन्त्रलक्षणे वरणे सति ॥ १३ ॥

इत्थमध्वर्युकर्तृकं होतृवरणमभिधाय तस्य स्वं जपं विधत्ते–स प्रवृतो होता जपतीति । 'देवता उपधावतीति ' जपप्रयोजनकथनम्; 'तस्मात् ' मन्त्रे सति पित्रग्न्यादीनां श्रवणात् । उपधावनप्रकारं योजयित्वा दर्शयति–यथानुपूर्व्येति । यथा याज्यान्तमये होता वषट्कर्तव्यदेवता अनुदिश्य अनुदिश्य वषट्करोति, यथा वा अग्निस्तं देवमुद्दिश्य हव्यं वहति, तथा च स यज्ञो यथा 'न ह्वलेत् ' न चलेत्, न भ्रश्येत्; एवं स होता देवेभ्य उपधावनं कृतवान् भवति ॥ १४ ॥

तत्र जपतीति । 'तत्र ' तस्मिन् वरणाख्ये कर्मणि । मन्त्रभागस्यायमर्थः–हे 'सवितः !' सकलकर्मानुज्ञातः ! 'देव ' 'एतत् ' एतेन मम वरणेन मद्व्याजेन 'त्वा ' त्वामेव 'वृणते ' अध्वर्यवः । 'तत् ' तेन

१–' प्रवृणीतेऽहोता ' इति मूल इति केचम् । २–" अत्राध्वर्युकर्तृकं होतृवरणं श्रुत्या प्रतिपादितमत एव कात्यायनेन 'होतरेहि ' इत्याश्वलायनवत् ' एहि होतः ' इति संबोधनवत्वं होतुरामन्त्रणमध्वर्युसूत्रे नोपनिबद्धं न वा होतृसूत्रेऽपि दर्शितः । अ... चातुर्वैदिकहोत्रादौ होतुरामन्त्रणमेषमङ्गलायनं इदानीन्तनाः श्रौतकर्मकरा अपेक्षा एव, तेषामाचारस्यैतद्विषयकाज्ञानमूलत्वम् । ३–' अनुदिश्य वषट्करोति ' इति पा०।

निह्नुते यदहाग्नेऽग्निमाह तदग्नये निह्नुतेऽथ यो देवाना ँ होता तमग्न ऽआह तद् देवेभ्यो निह्नुते ॥ १५ ॥

सह पित्रा वैश्वानरेणेति । संवत्सरो वै पिता वैश्वानरः प्रजापतिस्त-त्संवत्सरायैवैतत्प्रजापतये निह्नुतेऽग्ने पूषन्बृहस्पते प्र च वद प्र च यजे-त्यनुवक्ष्यन्वा ऽएतद्यक्ष्यन्भवति तदेताभ्य ऽएवैतद्देवताभ्यो निह्नुते यूप-मनुब्रूत यूपं यजतेति ॥ १६ ॥ [ शतम् ४०० ]

वसूना ँ रातौ स्याम । रुद्राणामुर्व्यायाँ स्वादित्या ऽदितये स्यामा-नेहस ऽइत्येते वै त्रया देवा यद्वसवो रुद्रा ऽआदित्या ऽएतेषामभिगुप्तौ स्यामेत्येवैतदाह ॥ १७ ॥

---

देवना प्रसविता । " अग्नि होत्राय "—इति । यदग्नये चैवैतद् देवेभ्यश्च निह्नुते । यदहाग्नेऽग्निमाह-तद् अग्नये निह्नुते । अथ यो देवाना होता तमग्ने आह—तद् देवेभ्यो निह्नुते ॥ १५ ॥

" सह पित्रा वैश्वानरेण "—इति । संवत्सरो वै पिता वैश्वानरः प्रजापतिः । तत्संवत्सरायैव एतत्प्रजापतये निह्नुते—" अग्ने पूषन् बृहस्पते प्र च वद, प्र च यज " इति । अनुवक्ष्यन् वा एतद् यक्ष्यन् भवति, तदेताभ्य एवैतद् देवताभ्यो निह्नुते—' यूपमनुब्रूत, यूप यजत ' इति १६

" वसूनां रातौ स्याम, रुद्राणाम् उर्व्यायाम्, स्वादित्या अदितये स्यामानेहसः "—इति । एते वै त्रया देवाः—यद् वसवो रुद्रा आदित्याः । एतेषामभिगुप्तौ स्याम—इत्येवैतदाह ॥१७॥

---

मन्त्रपाठेन सवितृप्रेरणा लब्धा भवति । ' हि '—शब्देन " सविता वै प्रसवानामीशे " ( ऐ० ब्रा० १. ३. १ ) इत्यादिश्रुतिप्रसिद्धिर्द्योत्यते । अग्नि * होत्रायेतीति । होतु कर्म ' होत्र ' स्व-स्व-मन्त्रपाठादि, तत् होत्र कर्तुम् ' अग्नि ' वृणते, न तु मामित्यर्थ । मन्त्रगत यदग्नि-पदम्, यच्च तद्विशेषण देवहोतृपदम्, तदु-भय पूर्ववद् विभज्य प्रशसति—यदग्नय इत्यादिना ॥ १५ ॥

सह पित्रेत्यादि । विश्वे च ते नराश्च विश्वनरा, तेषा सम्बन्धी वैश्वानर, स च पालनात् 'पिता' उच्यते, तेन सह, अग्नि वृणत इति पूर्वेण सम्बन्ध । वैश्वानरात्मक देवमग्नि च वृणत इत्यर्थ । वैश्वानरशब्दस्यात्र प्रसिद्धेश्चाभिमतमर्थमाह—संवत्सरो वा इति । " संवत्सरो वै प्रजापति " ( ऐ० ब्रा० २ २ ७ ) इति श्रुते । संवत्सरस्य प्रजापतित्वम्, तस्यैव सकलमनुष्योत्पादकत्वेन सम्बन्धाद् वैश्वानरत्वम् । अग्ने पूषन्निति मन्त्रभागस्याभिप्रायमाह—अनुवक्ष्यन् वा इति । होता अनुवाक्या पठिष्यन्, याज्याभि ' यक्ष्यन् ' च ' भवति ' ' तत् ' एतदनुवचन यजनस्यैव ' एताभ्य ' अग्न्यादिदेवताभ्य । निह्नवाय भवति । ' प्र च वद ' ' प्र च यजेति ' प्रवचनयजनयोस्तेष्वारोप । इमामेव निह्नुतिं विशदयति—यूपमिति ॥ १६ ॥

वसूनामिति । रातिर्दानम्, तस्यां मनेम, धनं लभेमहीत्यर्थ । ' रुद्राणाम् ' ' उर्व्यायाम् '—इति उरुत्वे, तेषा च महत्त्वम्—तस्मिन् स्यामेति सम्बन्ध । ' स्वादित्या ' तेजस्सुपसदनेन सुप्रीता आदित्या वयम् ' अदि-

---

१—मन्त्रार्थस्त्वभिरैवाज्ञातो बोध्य । तथा प्रकरणानुसारत्वादनामन्यमन्त्रार्थश्च कल्पित स्यात् । परमेतानी तत्तामनुप्र-श्रेय । एवमग्रेऽपि ।

जुष्टामद्य देवेभ्यो वाचमुद्यासमिति । जुष्टमद्य देवेभ्योऽनूच्यासमित्येवैत-दाह तद्धि समृद्धं यो जुष्टं देवेभ्योऽनुब्रवत् ॥ १८ ॥

(जु) जुष्टां ब्रह्मभ्य इति । जुष्टमद्य ब्राह्मणेभ्योऽनूच्यासमित्येवैतदाह तद्धि समृद्धं यो जुष्टं ब्राह्मणेभ्योऽनुब्रवत् ॥ १९ ॥

(जु) जुष्टां नराशंसायेति । प्रजा वै नरस्तत्प्रजाभ्यः प्रजाभ्य आह तद्धि समृद्धं यश्च वेद यश्च न साध्ववोचत्साध्ववोचदित्येव विमृशन्ति यदद्य होतृवर्ये जिह्मं चक्षुः परापतत् अग्निष्टत्पुनराभ्रियाज्जातवेदा विचर्षणिरिति यथा यातयेऽग्नीन्होत्राय प्रावृणत ते प्राधन्वन्नेवं यन्मेऽत्र प्रवेता मायि तस्मै पुनराप्यायेत्येवैतदाह तथा हास्यैतत्पुनराप्यायते ॥ २० ॥

---

"जुष्टामद्य देवेभ्यो वाचमुद्यासम्"—इति । जुष्टमद्य देवेभ्योऽनूच्यासमित्येवैतदाह । तद्धि समृद्धं—यो जुष्टं देवेभ्योऽनुब्रवत् ॥ १८ ॥

"जुष्टां ब्रह्मभ्यः"—इति । जुष्टमद्य ब्राह्मणेभ्योऽनूच्यासमित्येवैतदाह । तद्धि समृद्धं—यो जुष्टं ब्राह्मणेभ्योऽनुब्रवत् ॥ १९ ॥

"जुष्टां नराशंसाय"—इति । प्रजा वै नरः । तत्प्रजाभ्यः प्रजाभ्य आह । तद्धि समृद्धम् । यश्च वेद, यश्च न, साध्ववोचत्—साध्ववोचत्—इत्येव विमृशन्ति । "यदद्य होतृवर्ये जिह्मं चक्षुः परापतत्, अग्निष्टत् पुनराभ्रियाज्जातवेदा विचर्षणिः"—इति । यथा यातयेऽग्नीन् होत्राय प्रावृणत—ते प्राधन्वन्; एवं यन्मेऽत्र प्रवेतानायि, तस्मै पुनराप्यायस्व—इत्येवैतदाह । तथो हास्यै-तत्पुनराप्यायते ॥ २० ॥

( इ ) अथ होतृषदनमुपावर्तते । स होतृषदनादेकं तृणं निरस्यति निरस्तः परावसुरिति परावसुर्ह वै नामासुराणा ᳫं होता स तमेवैतद्धोतृषदनान्निरस्यति ॥ २३ ॥

( त्यु ) अथ होतृषदन ऽउपविशति । ( ती ) इदमहमर्वावसोः सदने सीदामीत्यर्वावसुर्वै नाम देवाना ᳫं होता तस्यैवैतत्सदने सीदति ॥२४॥

तत्र जपति । विश्वकर्मस्तनूपा ऽअसि मा मोदोषिष्टं मा मा हि ᳫं सिष्ट-मेष वां लोक इत्युदङ्ङेजत्यन्तरा वा ऽएतदाहवनीयं च गार्हपत्यं चास्ते तद् ताभ्यां निह्नुते मा मोदोषिष्टं मा मा हि ᳫं सिष्टमिति तथा हैनमेतौ न हिᳫंस्तः ॥ २५ ॥

---

अथ होतृषदनमुपावर्तते । स होतृषदनादेकं तृणं निरस्यति–"निरस्तः परावसुः"–इति । परावसुर्ह वै नामासुराणां होता, स तमेवैतद् होतृषदनाद् निरस्यति ॥ २३ ॥

अथ होतृषदने उपविशति ' इदमहमर्वावसोः सदने सीदामि ' इति । अर्वावसुर्वै नाम देवानां होता, तस्यैवैतत् सदने सीदति ॥ २४ ॥

तत्र जपति–"विश्वकर्मस्तनूपा असि । मा मोदोषिष्टम् । मा मा हिंसिष्टम् एष वां लोकः"–इति उदङ् एजति । अन्तरा वा एतद्–आहवनीयं च गार्हपत्यं चास्ते । तद् ताभ्यां निह्नुते–मा मोदोषिष्टम्–मा मा हिंसिष्टम्–इति । तथा हैनमेतौ न हिंस्तः ॥ २५ ॥

---

अथेति । सम्मर्शनदेशात् ' होतृषदनं ' प्रत्यागच्छेत् । उत्तरवेदिश्रोणेर्होतृषदनम् । ' सः ' होता तस्मात् सदनात् ' एकं तृणं ' " निरस्त "–इति मन्त्रेण निरस्येत् । परावसोर्निरसने कारणमाह–परावसुर्हेति । ' परा ' परागतं ' वसु ' यज्ञाख्यं धनं यस्मात्, स तथोक्तः ॥ २३ ॥

" अथ होतृषदन इति । उपवेशनमन्त्रमाह–इदमहमिति । ' अर्वा ' अर्वाक्–अभिमुखं ' वसु ' यज्ञाख्यं धनं यस्य, स तथोक्त । ' तस्य ' ; सीदत्यनेनेति ' सदनं ' स्थानम् । तत्र संस्थितिभावनया स्वयमपि तत्सदृशो भवतीत्यभिप्रायः ॥ २४ ॥

तत्रोपविष्टस्य मन्त्रजपं विधत्ते–तत्रेति । हे विश्वकर्मन् ! कृत्स्नविषयव्यापारं करोतीति विश्वकर्मा, ' तनूपाः ' तनोः पाता, महादेव ! त्वं शरीरस्य पाता भवसि । उपवेशनस्थानादीषदुत्तरतश्चलनं समन्त्रकं विधत्ते–मा मेति । तस्यायमर्थः–हे उभा अग्नी ! युवां ' मा ' माम् ' उत् ' उत्कृष्टमाधिक्येन ' मा उषिष्टं ' दाहं मा कार्ष्टम् । " उष दाहे "–इति ( धा. पा. भ्वा. प. ६९६ ) धातुः । अस्यैव तात्पर्यमाह–' मा हिंसिष्टम् ' इति । यत् ' एष ' ' लोकः ' ' वां ' सम्बन्धि स्थानम्, अतो हेतोर्मां मा हिंसिष्टमिति प्रार्थना युक्ता । होतृषदनाद् ' उदङ् ' उदङ्मुखः ' एजति ' । " एजृ–कम्पने " ( धा. पा. भ्वा. आ. २३४ ) जपन् कम्पते । ' अन्तरा वा ' इत्यादिना दाहप्रसङ्गप्रदर्शनम् ॥ २५ ॥

---

१–आरभ्यारेवास्मिन् ब्राह्मणे प्रयुज्यमाना इमे मन्त्रा इहैवाम्नाता द्रष्टव्याः, न तु संहितायां श्रुताः प्रायेण । २–सांख्या. श्रौ. सू. १ । ६ । ६ । ' परावसुः ' इति कोशे- २ । १२७ । ३–' सम्पश्य उपविशतः ' ( श्रौ० सू० ३. २३ ) ।

( स्तोऽथा ) अथाग्निमीक्षमाणो जपति । विश्वेदेवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानीति यथा येभ्यः पक्वं स्यात्तान्ब्रूयादनु मा शास्त यथा व ऽआहरिष्यामि यथा वः परिवेक्ष्यामीत्येवमेवैतद्देवेषु प्रशासनमिच्छतेऽनु मा शास्त यथा वोऽनुष्ठ्या वषट्कुर्यामनुष्ठ्या हव्यं वहेयमिति तस्मादेवं जपति ॥ २६ ॥ २ ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ( ५. १. ) ॥

अग्निर्होता वेत्त्वग्नेर्होत्रमिति । ( त्य ) अग्निरिदं होता वेत्त्वित्येवैतदाहाग्नेर्होत्रमिति तस्यो हि होत्रं वेत्तु प्रावित्रमिति यज्ञो वै प्रावित्रं वेत्तु

---

अथाग्निमीक्षमाणो जपति–" विश्वेदेवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि '–( ऋ० सं० १०. ५२. १ ) इति । यथा येभ्यः पक्वं स्यात्, तान् ब्रूयाद्–' अनु मा शास्त–यथा वऽआहरिष्यामि, यथा ▮ परिवेक्ष्यामि ' इति । एवमेवैतद् देवेषु प्रशासनमिच्छते–' अनु मा शास्त,–यथा वोऽनुष्ठ्या वषट् कुर्याम्, अनुष्ठ्या हव्यं वहेयम् ' इति । तस्मादेवं जपति ॥ २६ ॥

पञ्च प्रयाजयागाः ।

" तत्र स्रुगादापननिगदः । "

" अग्निर्होता वेत्त्वग्नेर्होत्रम् "–इति । अग्निरिदं होता वेत्तु–इत्येवैतदाह । अग्नेर्होत्रमिति ।

---

अथ समन्त्रकं जपं विधत्ते–अथाग्निमित्यादिना । मन्त्रस्यायमर्थः–हे ' विश्वेदेवा ! ' ' इह ' यज्ञे होतृत्वेन ' वृत ' अहं ' यथा ' येन प्रकारेण, ' यथा ' येन ' च ' पथा ' मार्गेण, ' व ' ' हव्यम् ' ' आ ' समन्ताद् ' वहानि ' प्रापयानि, तदुभयं ' मे ' मह्यं मन्त्रम् ' प्रब्रूत ' । एतं मन्त्रस्यार्थं लोकदृष्टान्तप्रदर्शनपुरःसरं विशदयति–यथा येभ्य इत्यादिना । ' यथा ' लोके कश्चित् पाचकः तत्स्वामिनं पृच्छति–' पक्वम् ' अन्नं यथाऽऽनेष्यामि, यथा वानीतं पात्रे समर्पयामीति । एवम्प्रकारप्रश्नस्य लोके दृष्टत्वाद् उक्तमनुशासनप्रार्थनमित्यर्थः । दार्ष्टान्तिके योजयति–एवमेवैतदिति । ' अनुष्ठ्या ' आनुपूर्व्येण ' वषट्कुर्याम् ' वषडिति शब्दं ब्रूयाम् । वषट्–शब्दो हविःप्रदानसाधनं । " स्वाहाकारेण वा वषट्कारेण वा देवेभ्योऽन्नं प्रदीयते "–इति श्रुतेः । सिद्धमन्यत् ॥ २६ ॥ २ [ ५, १. ]

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥

अथ स्रुगादापननिगदं नवधा विभज्य व्याचिख्यासुरादौ भागमनूद्य तस्यार्थमाह–अग्निर्होतेति । वेदितव्यस्य

---

१- हव्यमा ' क० च० । २–' होत्र ' मिति भाष्यकाराभिमतं पाठं मन्यामहे । ३–" अग्निर्होतेति स्रुगादापनं प्रयाजेषु सन्निधे " ( का० श्रौ० सू० ३. ३४ )

यज्ञमित्येवैतदाह साधु ते यजमान देवतेति साधु ते यजमान देवता यस्य तेऽग्निर्होतेत्येवैतदाह घृतवतीमध्वर्यो स्रुचमास्यस्वेति तदध्वर्युं प्रसौति स यद्देकामिवाह ॥ १ ॥

यजमान एव जुहूमनु । योऽस्माऽअरातीयति स उपभृतमनु स यद्द्वेऽइव ब्रूयाद्यजमानाय द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्यादत्रैव जुहूमन्वाच उपभृतमनु स यद्द्वेऽइव ब्रूयादत्रऽआद्यं प्रत्युद्यामिनं कुर्यात्तस्मादेकामिवैवाह ॥ २ ॥

---

तस्यो हि होत्रम् । " वेत्तु मावित्रम् "—इति । यज्ञो वै मावित्रम् । वेत्तु यज्ञमित्येवैतदाह । ' साधु ते यजमान ! देवता '—इति । साधु ते यजमान देवता यस्य ते अग्निर्होता इत्येवैतदाह । ' घृतवतीमध्वर्यो ! स्रुचमास्यस्व '—इति । तदध्वर्युं प्रसौति । स यद्देकामिवाह ॥ १ ॥

यजमान एव जुहूमनु, योऽस्मा अरातीयति—स उपभृतमनु । स यद्द्वे इव ब्रूयाद् यजमानाय द्विषन्तं भ्रातृव्यं प्रत्युद्यामिनं कुर्यात् । अत्रैव जुहूमनु, आच उपभृतमनु । स यद्द्वे इव ब्रूयाद्—अत्र आद्यं प्रत्युद्यामिनं कुर्यात् । तस्मादेकामिवैवाह ॥ २ ॥

---

मन्त्रेऽनिर्देशात् ' इदम् '—इति तत्कर्मप्रदर्शनम् । दैव्यो ' होता ' ' अग्निः ' ' इदम् ' अनुष्ठेयं कर्म ' वेत्तु ' जानातु । एतन्मन्त्रवाक्यम् । ' वेत्विति ' किम् ? आह—इदं ' हौत्रं ' कर्म जानात्वित्याह । किं तद्वेदनेनेति ? तस्य होत्रेण प्रतिनियतं सम्बन्धमाह—अग्नेरिति । ' तस्य उ हि ' तस्यैव हि । स च सम्बन्धनियम एवकारार्थेन ' उ '—शब्देन द्योत्यते । द्वितीयभागे मावित्रशब्दार्थमाह—यज्ञो वा इति । प्रकर्षेणावनाति ' मावित्रः ' यज्ञः । अवतेरित्रप्रत्ययः ( उणा. ४ । १७१ ) । यज्ञपरिज्ञाने होत्रज्ञानमपि भवतीति तज्ज्ञानमाशास्यते ।

तृतीयभागे सामान्येन निर्दिष्टां यजमानदेवतां विशिष्य व्याचष्टे—साधु त इति । हे ' यजमान ! ' ते तव ' देवता ' ' साधु ' साध्वी । कथं साधुत्वम् ? कैषा सा ? तदाह—यस्य त इति । होतृत्वगुणकोऽग्निरेव तव देवतेत्याह स मन्त्रवाक्यम् ।

चतुर्थभागे वाक्यार्थस्य स्पष्टतात्पर्यमाह—घृतवतीमिति । घृतयुक्तां ' स्रुचम् ' ' आस्यस्व ' हस्ते धारयेत्यर्थः । अनेनाध्वर्योरनुज्ञां दत्तवान् भवति ( का. श्रौ. सू. ३ । ३९ ) । " उपसर्गादस्यत्यूह्योर्वा वचनम् " ( पा. सू. ७ । १ । ७ वा. २ )—इत्यात्मनेपदम् । मन्त्रे ' स्रुचम् '—इत्येकस्या एव निर्देशं द्वित्वनिर्देशप्रसक्तिनिन्दापुरःसरं द्रढयति—स यदित्यादिना । ' सः ' होता ' एकामिव ' स्रुचमित्येकामेव ब्रूयात् ॥ १ ॥

यजमान एवेति । ' जुहूमनु ' जुह्वा अनुकूलः, तदभिमानीत्यर्थः । ' यः ' च यजमानस्य ' अरातीयति ' शात्रवमिच्छति, ' सः ' ' उपभृतमनु ' उपभृतोऽनुकूलः । यत एवमतो होता यदि ' द्वे इव ' जुहूपभृतावास्यस्वेत्येव ' ब्रूयात् ', तदा ' यजमानाय ' द्वेष्टारं शत्रुं ' प्रत्युद्यामिनं ' प्रतिकूलोद्योगवन्तं ' कुर्यात् ' । तथा च तैत्तिरीयकम्—" यजमानदेवत्या वै जुहूः, भ्रातृव्यदेवत्योपभृत् "—( तै. सं. २. ६. ९. ३ )

---

१—त्वचैव तैत्तिरीयके श्रुतः । " यजमानदेवता " इति मन्त्रभागस्यार्थो योऽत्र होतृत्वगुणक इत्येतावान् मन्त्रभागोऽत्र दृश्यते । २—" घृतवतीमित्युक्ते स्रुचावादायार्थक्रमप्रत्याह समिधो यजेति च प्रवानन्तरमेतस्मै " का. श्रौ. सू. ३ । ३५ ।

देवयुवं विश्ववारामिति । ( स्तु ) उपस्तौत्येवैनामेतन्महयत्येव यदाह देवयुवं विश्ववारामितीडामहे देवाँ२ ॥ ऽईडेन्यान्नमस्याम नमस्यान्यजाम यज्ञियानितीडामहे तान्देवान्य ऽईडेन्या नमस्याम तान्ये नमस्या यजाम यज्ञियानिति मनुष्या वा ऽईडेन्याः पितरो नमस्या देवा यज्ञियाः ॥ ३ ॥

( ५ ) या वै प्रजा यज्ञेऽनन्वाभक्ताः । पराभूता वै ता ऽएवमेवैतद्या ऽइमाः प्रजाऽ अपराभूतास्ता यज्ञ ऽआभजति मनुष्याननु पशवो देवाननु वयाᳬस्योषधयो वनस्पतयो यदिदं किञ्चैवमु तत्सर्वं यज्ञ ऽआभक्तम् ॥ ४ ॥

---

" देवयुवं विश्ववाराम् "–इति । उपस्तौत्येवैनामेतत्, महयत्येव–यदाह, देवयुवं विश्ववारामिति । " ईडामहे देवा ई ॥ ईडेन्यान्, नमस्याम नमस्यान्, यजाम यज्ञियान् "–इति । ईडामहे तान् देवान्–ये ईडेन्याः, नमस्याम तान्–ये नमस्याः, यजाम यज्ञियान्–इति । मनुष्या वा ईडेन्याः, पितरो नमस्याः, देवा याज्ञियाः ॥ ३ ॥

या वै प्रजा यज्ञे अनन्वाभक्ताः–पराभूता वै ताः । एवमेवैतत्–या इमाः प्रजा अपराभूताः–ता यज्ञ आभजति । मनुष्यान् अनु पशवः, देवान् अनु वयांस्योषधयो वनस्पतयो यदिदं किञ्च एवमु तत्सर्वं यज्ञे आभक्तम् ॥ ४ ॥

---

इति । दोषान्तरोऽप्यामेनापि द्विवचनं निषेधति–अत्तवेति । ' आम ' अदनीयो व्रीहियवादिपदार्थः तम् ' अत्र ' यजमानाय प्रतिकूलं कुर्यात् ॥ २ ॥

देवयुवमिति । देवानिच्छतीति ' देवयु ' " क्याच्छन्दसि " ( पा ३. २. १७० )–इत्युप्रत्ययः । [illegible] देवैर्वरणीया ' विश्ववारा ' । [illegible] । ' एना ' सुचम् एतत् ' उपस्तौत्येव ' [illegible] । अत्र न [illegible] इति । नापि किमथ स्तुवन् इत्यत आह–' एतत् ' ' महयत्येव ' पूजयत्येव । ' यदाह ' यदेतद्वाक्यं मन्त्र आह इत्यर्थः ।

निगदस्य [illegible] पृथक्–पृथग् व्याख्यातुमनुवदति–ईडामहा इत्यादि । ' ये ' देवा ' ईडेन्या ' स्तुत्याः, स्तुतिभाजना इत्यर्थः ' ये ' च ' नमस्या ' नमस्कारमर्हन्ति ये च ' यज्ञिया ' यष्टव्याः हविर्भाजः, तान् सर्वान् [illegible] स्तुति नमस्कार–यागैः ' ईडामहे ' पूजयामहे–इति मन्त्रार्थः । ' ईडेन्यान् '–इति " ईड–स्तुतौ " ( अ. आ ९ ) इत्यस्य ' केन्य ' प्रत्ययः । ईडेन्यादिभिः प्रशंसति–मनुष्या वा इत्यादिना । [illegible] प्राशंस्येन परिस्तुत्येन्तः इति ' ईडेन्या ' मनुष्याः " नमस्कारो हि पितॄणाम् " ( तै. ब्रा. १. ३. १०. ८ ) इति श्रुतेः ' नमस्या ' पितरः, हविः प्रदानमन्त्रेणापरितोषात् ' देवा ' यज्ञियाः ॥३॥

यजाम यज्ञियानिति [illegible] यज्ञस्य [illegible] याग तदनुप्रवेशेन प्रशंसति–या वा इत्यादिना । देवमनुष्यादिकासु प्रजासु मध्ये ' या ' प्रजा यज्ञसम्बन्धेन [illegible], तत्प्रकारमाह–मनुष्याननु इति । ' मनुष्यान् ' अनुसृत्य ' पशव ' गवाद्याः [illegible] । ' देवान् ' अनुसृत्य ' वयांसि ' पक्षिणोऽनुप्रविष्टाः, " [illegible] " ( वा. सं. २४. २०. १ ) इति श्रुतेः । अथ वा

---

१–परिलोपदन्–पा० । २–" [illegible] "–इति [illegible] इत्यत्र सा भाष्ये । ३–[illegible] भवेत् ।

ता वा ऽएताः । ( ० ) नव व्याहृतयो भवन्ति नवेमे पुरुषे प्राणा ऽएतानेवास्मिन्नेतद्दधाति तस्मान्नव व्याहृतयो भवन्ति ॥ ५ ॥

यज्ञो ह देवेभ्योऽपचक्राम । तं देवा ऽअन्वमन्त्रयन्ता नः शृणूप न आवर्तस्वेति सोऽस्तु तथेत्येव देवानुपाववर्त तेनोपावृत्तेन देवा ऽअयजन्त तेनेष्ट्वैतदभवन्यदिदं देवाः ॥ ६ ॥

स यदाश्रावयति । यज्ञमेवैतदनुमन्त्रयत ऽआ नः शृणूप न आवर्तस्वेत्यथ यत्प्रत्याश्रावयति यज्ञ ऽएवैतदुपावर्ततेऽस्तु तथेति तेनोपावृत्तेन

---

ता वा एता नव व्याहृतयो भवन्ति । नवेमे पुरुषे प्राणाः–एतानेवास्मिन् एतद् दधाति । तस्मान्नव व्याहृतयो भवन्ति ॥ ५ ॥

" आश्रावणप्रत्याश्रावणनिगदः । "

यज्ञो ह देवेभ्योऽपचक्राम । तं देवा अन्वमन्त्रयन्त–' आ नः शृणु, उप न आवर्तस्व ' इति । सः ' अस्तु तथा ' इत्येव देवानुपाववर्त । तेनोपावृत्तेन देवा अयजन्त । तेनेष्ट्वा एतद् अभवन्–यदिदं देवाः ॥ ६ ॥

स यदाश्रावयति–यज्ञमेवैतदनुमन्त्रयते–' आ नः शृणु; उप न आवर्तस्व ' इति । अथ यत्प्र-

---

एकहायनप्रभृति–पञ्चदशहायनान्ताः ' पशवो वयांसि ', तान्यनुप्रविष्टानीत्यर्थः । तान्यनुप्रवेशाच्चपुरोडाशाः, यूपादियज्ञसाधनद्वारेणौषधिवनस्पत्यादयः । किं बहुना ' यत् किं चेदं ' प्रतीयमान वस्तु अस्ति, ' तत् ' ' सर्वम् उ ' सर्वमप्येनमेव द्वारि द्वारया यज्ञमनुप्रविष्टमेव । अतो यज्ञससर्गवर्ना न कदाचित् परामर्षोऽस्ति, तदसंसृष्टं च न किञ्चिदस्तीति यज्ञस्तुतिः ॥ ४ ॥

निगदविभागगता नवसङ्ख्यां प्रशंसति–ता वा इति । ' व्याहृतयः ' उक्तवाक्यानि । तानि च ' नव ' । सप्त शीर्षण्याः ( ऐ. ब्रा. १ । ३ । ६, २ । १ । ३ ) द्वाववाञ्चाविति[3] ( ऐ. ब्रा. १ । ३ । ६ ) प्राणा अपि नैव ( तै. स ३ । ५ । १० । ५ ) । तदेतेन नवविभागकरणेन अस्मिन् यजमाने ' पुरुषे ' ' एतान् ' प्राणान् ' नव ' स्थापितवान् भवति ॥ ५ ॥

अथाश्रावणप्रत्याश्रावणे विधातुमाख्यायिकामाह–यज्ञो हेति । पुरा किल ' यज्ञः ' केनचिद्व्याजेन ' देवेभ्यः ' अपक्रान्तवान् । ' तं देवाः ' ' अन्वमन्त्रयन्त ' अनुनयेनाह्वयन्त ।–हे यज्ञ ! ' नः ' अस्माकं वचनं ' शृणु ' ' नः ' अस्मान् ' उपावर्तस्व ' प्रतिनिवर्तस्व । उपावर्चेति गुणश्छान्दसः । यद्वा उपावर्तनमुपावर्तः । आवर्तनामा यागासम्भवात्तस्य साधनत्वव्यपदेशः । देवाः यजमानाः ' अयजन्त ' माविगत्या तेषां देवत्वव्यवहारः । ' देवाः ' इति ' यदिदं ' देवत्वमस्ति, ' एतत् ' तस्यानुष्ठानेन ' अभवन् ' प्राप्नुवन्त इत्यर्थः ॥ ६ ॥

इदानीमाश्रावणं विधत्ते–स यदिति । यस्मादेव, तस्मात् ' सः ' अध्वर्युराश्रावयेत् । ' एतत् ' एतेन यज्ञ-

---

१–" अग्निहोता नव " इति तै. ब्रा. ३ । ५ । ४ । २–" सप्त वै शीर्षन्प्राणाः " इति ऐ. ब्रा. १ । ३ । ६; ३ । १ । ३ । ३–" अवाञ्चः " द्वावेरतस्याद्वर्तमान, अपानवाग्वादय. " इति ऐ. ब्रा. १ । ३ । ६ इति सा० भा० । ४–" नव वै पुरुषे प्राणाः " इति तै. स. ३ । ५ । १० । ५ । "शिरोवर्तिष्वेतेषु सप्तसु छिद्रेषु अधोवर्तिनयोश्च द्वयोश्छिद्रयोः सञ्चरन्तः प्राणा नवसङ्ख्याकाः" इति तत्रैव सा. भा । ५–प्राणानेव स्थापितवान् भवति–सा० । ६–मूले तु न दृश्यते उपावर्त्त–इति पदम्–उपावृत्तेनेत्यस्य स्थाने उपावर्तनेनेति भाष्यसम्मतः पाठः स्यादिति तु प्रतिभाति । ७–' ओ ३ श्रावय ' इत्यस्याश्रावणसंज्ञा ।

रेतसा भूतेनर्त्विजः सम्प्रदायं चरन्ति यजमानेन परोक्षं यथा पूर्णपात्रेण सम्प्रदायं चरेयुरेवमनेनर्त्विजः सम्प्रदायं चरन्ति तद्वाचैवैतत्सम्प्रदायं चरन्ति वाग्घि यज्ञो वागु हि रेतस्तदेतेनैवैतत्सम्प्रदायं चरन्ति ॥ ७ ॥

सोऽनुब्रूहीत्येवोक्त्वाध्वर्युः । ( नो ) नापव्याहरेन्नो एव होतापव्याहरेदाश्रावयत्यध्वर्युस्तदग्नीधं यज्ञ उपावर्तते ॥ ८ ॥

सोऽग्नीन्नापव्याहरेत् । ( वा ) आ प्रत्याश्रावणात्प्रत्याश्रावयत्यग्नीत्तत्पुनरध्वर्युं यज्ञ उपावर्तते ॥ ९ ॥ [ काण्डस्यार्धम् ]

---

त्याश्रावयति—यज्ञ एवैतमुपावर्तते ' अस्तु तथा ' इति । तेनोपावृत्तेन रेतसा भूतेन ऋत्विजः संप्रदायं चरन्ति, यजमानेन परोक्षम् । यथा पूर्णपात्रेण सम्प्रदायं चरेयुः—एवमनेन ऋत्विजः सम्प्रदायं चरन्ति । तद्वाचैवैतत् समप्रदायं चरन्ति, वाग् हि यज्ञः, वाग् उ हि रेतः, तदेतेनैवैतत् संप्रदायं चरन्ति ॥ ७ ॥

सः ' अनुब्रूहि ' इत्येवोक्त्वा अध्वर्युर्नापव्याहरेत्, नो एव होतापव्याहरेत् । आश्रावयति अध्वर्युः तदग्नीधं यज्ञ उपावर्तते ॥ ८ ॥

सोऽग्नीन्नापव्याहरेत्-आ प्रत्याश्रावणात् । प्रत्याश्रावयत्यग्नीत्-तत् पुनरध्वर्युं यज्ञ उपावर्तते ॥९॥

---

मेवानुमन्त्रितवान् मन्त्रानि तत्प्रकारप्रदर्शनम् । आ न इति । यत एतदेव तस्मात् । " आने शृणु " इत्यस्य आश्रावणार्थं वेत् । अथ प्रत्याश्रावणं विधत्ते—अथ यदिति । तेनाग्नीध्रकर्तृकेन प्रत्याश्रावणेन ' तथास्त्विति ' प्रतिनिवृत्ति कृता भवति प्रत्याश्रवणशब्दस्य उक्तार्थप्रतीति । आश्रावणादिवषट्कारान्तमन्त्रवादे स्व स्व-समये मौन विधिमुराह—तेनेति । 'तेन' प्रत्यावृत्तेन 'रेतसा भूतेन' बीजभूतेन स्वर्गाख्यफलोदयाद् बीजत्व यज्ञस्य । ' ऋत्विज ' अध्वर्य्वादय स्वस्मिन्नाश्रित यज्ञ ' सम्प्रदायं ' सम्यक् प्रदाय—प्रदाय, एकोऽयस्मै सोऽन्य यस्मा इत्यैव प्रकारेण ' चरन्ति ' अनुतिष्ठन्ति । ' यजमानेन ' ' परोक्ष ' तमनपेक्ष्य तस्य तत्र व्यापाराभावात् । परस्परसमर्पणे दृष्टान्तमाह—यथेति । यथा जलेनापूर्णं घटादिपात्र गृहान्तर्गतप्रभूतभाण्डपूरणमयं परम्परहस्तेन समरन्ति, तद्वत् । एतदन्न विशिनष्टि—तद्वाचैवेति । ' तत् ' तदा ' वाचैव ' वाग्रूपेणैव, आश्रावणादिवाचमन्त्रेण यज्ञसिद्धेर्वाच्या यज्ञ व्यपदेश. । अन्वेत्र किं तत आह—वाग्घीति । वाचा मन्त्राभिकता यज्ञस्योपसंभ्यवा रेतस्त्वम्, तदित्याद्युपसंहार ॥ ७ ॥

अथ सम्प्रदायोक्त यज्ञसम्प्रदान विशिषन्नध्वर्य्वादि स्व-स्व-कालेषु मौन विधत्ते—सोऽनुब्रूहीत्यादिना । ' सोऽध्वर्यु ' होतार प्रति ' अनुब्रूहीत्युक्त्वैव ' तदनन्तरमेव ' नापव्याहरेत् ' प्रस्तुतानुपयोगि वचन न ब्रूयात् । ' होता ' अपि अनुवचनद्वारेण वाग्रूपयज्ञस्य स्वस्मिन् समारोपात् " नो एव अपव्याहरेत् " पुन ' अग्नीध ' प्रति ' अध्वर्यु ' यदा ' आश्रावयति ' तदानीं स वाग्यज्ञ त प्राप्नोति ॥ ८ ॥

अत ' स ' अपि ' न व्याहरेत् ' स्वप्रत्याश्रावणावधि । स ' अग्नीत् ' यदा ' अध्वर्यु ' प्रति प्रत्याश्रावयेत्, तदैव ' यज्ञ ' पुन आगच्छेत् ॥ ९ ॥

---

१—तदनन्तरं एव एव आश्रावणार्थोऽनुवाकवाक्यं । २—' अस्तु श्रौ ' वौ ' इत्यस्य प्रत्याश्रावणरूपा । ३—' अनुब्रूहि ' इत्यनुवाक्यपाठाय इत्यैव । ४—अनुवाक्यापाठनन्तरं ।

सोऽध्वर्युर्नापव्याहरेत् । ( ड्ड ) आ यजेति व्वक्तोर्यजेत्येवाध्वर्युर्होत्रे यज्ञ ᳪ सम्प्रयच्छति ॥ १० ॥

स होता नापव्याहरेत् । ( ड्ड ) आ वषट्कारात्तं व्वषट्कारेणाग्नावेव योनौ रेतोभूत ᳪ सिञ्चत्यग्निर्वै योनिर्यज्ञस्य स ततः प्रजायत ऽइति नु हविर्यज्ञेऽथ सौम्येऽध्वरे ॥ ११ ॥

स वै ग्रहं गृहीत्वाध्वर्युः । ( र्नो ) नापव्याहरेदोपाकरणादुपावर्तध्वमित्ये-वाध्वर्युरुद्गातृभ्यो यज्ञ ᳪ सम्प्रयच्छति ॥ १२ ॥

त ऽउद्गातारो नापव्याहरेयुः । ( रो ) ओत्तमाया ऽएषोत्तमेत्येवोद्गातारो होत्रे यज्ञ ᳪ सम्प्रयच्छन्ति ॥ १३ ॥

---

सोऽध्वर्युर्नापव्याहरेत्—आ 'यज' इति वक्तोः । यजेत्येवाध्वर्युर्होत्रे यज्ञं सम्प्रयच्छति ॥१०॥

स होता नापव्याहरेत्—आ वषट्कारात् । तं वषट्कारेणाग्नावेव योनौ रेतोभूतं सिञ्चति । अग्निर्वै योनिर्यज्ञस्य—स ततः प्रजायते इति नु हविर्यज्ञे । अथ सौम्येऽध्वरे ॥ ११ ॥

स वै ग्रहं गृहीत्वाध्वर्युर्नापव्याहरेद्—आ उपाकरणाद् । 'उपावर्तध्वम्' इत्येवाध्वर्युरुद्गातृभ्यो यज्ञं सम्प्रयच्छति ॥ १२ ॥

स उद्गातारो नापव्याहरेयुः—आ उत्तमायाः । 'एषोत्तमा' इत्येवोद्गातारो होत्रे यज्ञं सम्प्रयच्छन्ति ॥ १३ ॥

---

अतः 'सः' अपि 'अध्वर्युः' 'आ यजेति' यजेतिवचनावधि 'न' अपव्याहरेत्' । अथ पुनः 'अध्वर्युः' यदा 'यजेति' स्व-वाग्यज्ञं 'होत्रे' सम्प्रयच्छति ॥ १० ॥

तदा प्रातयज्ञः 'सः' 'होता' वषट्कारपर्यन्तं 'नापव्याहरेत्' । स वषट्कारेणेति । 'सोऽध्वर्युः' होतृकृतेन 'वषट्कारेण' हवि प्रदानसाधनेन 'अग्नौ' योनिभूते 'रेतोभूत' हविः 'सिञ्चति' प्रयच्छति । यस्माच्च उत्पद्यते तत्तस्य योनिरिति प्रसिद्धिः 'वै'—शब्देन उच्यते । उक्त वाङ्नियम विषयविशेषे व्यवस्थाप-यति—न्विति । अत्र सूत्रम्—"अनुब्रूहीत्युक्त्वा नापव्याहरेद्धोता चाऽऽश्रावणात्" ( का. श्रौ. सू. ३. ९६. ) "आश्रावितेऽग्नीदाप्रत्याश्रावणात्" ( का. श्रौ. सू. ३. ९७ ) "प्रत्याश्रावितेऽध्वर्युराहोतृप्रैषात्" ( का. श्रौ. सू. ३. ९८ ) "होतावषट्कारादिति" ( का. श्रौ. सू. ३. ९९ ) । अथ सोमविषय वाङ्नियम प्रतिजा-नीते—अथ सौम्येऽध्वरे इति ॥ ११ ॥

स वा इत्यादि । 'अध्वर्युः' ग्रहग्रहणादनन्तरम् 'आ उपाकरणात्' । यदा चोद्गातारः स्तोत्र प्रार-भेरन्, तावत् 'नापव्याहरेत्' । यदा 'अध्वर्युः' उपावर्तध्वमिति ब्रूयात्, तदानीं तस्य यज्ञस्तान् 'उद्-गातॄन्' प्राप्नोति ॥ १२ ॥

'ते उद्गातारः' अपि 'आ उत्तमायाः' 'नापव्याहरेयुः' । तत्प्रभृत्युत्तमस्तोत्रीयापर्यन्तं न वदेयुः । यदा च 'एषा' अन्तिमा स्तोत्रीयेति 'उद्गातारः' प्रज्ञापयन्ति ॥ १३ ॥

---

१–'यज' इति याज्यावषट्कारपाठार्थो होत्रे प्रैषः । २–अपव्याहारो नाम लौकिकवदनमिति मत्त । ३–"प्रातर्वाच प्रवदतोः प्रातरनुवाकोपकरण देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति समिधमादधत्" का० श्रौ० सू० ९ । ६ । १० । इति । ४–तिसृषु ऋक्षु एकं स्तोत्रिय साम गीयते साम्नो । तत्रान्त्या ऋगुत्तमा स्तोत्रिया भवति ।

स होता नापव्याहरेत् । ( आ ) आ वषट्कारात्तं वषट्कारेणाग्नावेव योनौ रेतोभूतꣳ सिञ्चत्यग्निर्वै योनिर्यज्ञस्य स ततः प्रजायते ॥ १४ ॥

स यद्ध सोऽपव्याहरेत् । ( यं ) यं यज्ञ उपावर्तते यथा पूर्णपात्रं परासिञ्चेदेवꣳ ह स यजमानं परासिञ्चेत्स यत्र हैवमृत्विजः संविदाना यज्ञेन चरन्ति सर्वमेव तत्र कल्पते न मुह्यति तस्मादेवमेव यज्ञो भर्तव्यः ॥ १५ ॥

( ता ) ता वा एताः । पञ्च व्याहृतयो भवन्त्यो श्रावयास्तु श्रौषड्यज ये यजामहे वौषडिति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्तवः संवत्सरस्यैषैका यज्ञस्य मात्रैषा सम्पत् ॥ १६ ॥

---

स होता नापव्याहरेत्–आ वषट्कारात् । तं वषट्कारेणाग्नावेव योनौ रेतोभूतं सिञ्चति । अग्निर्वै योनिर्यज्ञस्य–स ततः प्रजायते ॥ १४ ॥

स यद् ह सोऽपव्याहरेत्–यं यज्ञ उपावर्तते, यथा पूर्णपात्रं परासिञ्चेद्–एवं ह स यजमानं परासिञ्चेत् । स यत्र हैवमृत्विजः संविदाना यज्ञेन चरन्ति–सर्वमेव तत्र कल्पते, न मुह्यति । तस्मादेवमेव यज्ञो भर्तव्यः ॥ १५ ॥

ता वा एताः पञ्च व्याहृतयो भवन्ति–' ओ श्रावय, ' ' अस्तु श्रौषड्, ' ' यज, ' ' ये यजा-

---

' होता ' अपि तदा प्रभृति ' नापव्याहरेत् ' ' आवषट्कारात् ' । तं वषट्कारेणेत्यादि पूर्ववत् । अत्र सूत्रम्–" सोम च ग्रह गृहीत्वोपाकरणात् " ( का. श्रौ. सू. ९. १० ) इति । " उत्तमस्तोत्रीयां प्रस्तुत्य होतरेवेति ब्रुवन्त उद्गातारः " ( का. श्रौ. सू. ९ । ११, १२ ) शासिष्यते होत्रे यज्ञप्रपन्नेर्, तदा प्रभृति वषट्कारपर्यन्तं होत्रा नापव्याहरेत् ॥ १४ ॥

उक्तवाङ्नियमाभावे बाधमाह–स यद्धेति । सोमयागे तस्य ग्रहणादि–प्रदानावधिकाले ' यं यज्ञ उपावर्तते, ' ' स ' ' यद् ' यदि ' अपव्याहरेत्, ' ' स ' ' यजमानं परासिञ्चेत् ' । अत्र दृष्टान्तः–' यथा ' ' पूर्णपात्रम् ' अभिमतप्रदेशे घटादिषु प्रक्षेपमकृत्वा अन्यत्र ' परासिञ्चेत् ' तादृगेव तत् । अपव्याहारेण यज्ञभ्रंशे सति स्वर्गादिफलभ्रंशाद् यजमान एव पराभिक्तो भवति । उक्तविपर्यये को गुण इत्याह–स यत्रेति । एवं सर्वेऽध्वर्य्वादय ऋत्विजः ' यत्र ' यज्ञे ' संविदानाः ' ऐकमत्यं प्राप्ताः स्व–स्व–कर्तव्यमेकाग्रेण जानन्तोऽनुतिष्ठन्ति, ' तत्र ' तस्मिन् यज्ञे ' सर्वमेव ' अङ्गजातं ' कल्पते ' फलजननसमर्थं भवति । एवं सत्येकोऽप्यृत्विक् ' न मुह्यति ' स्वानुष्ठेयं न विस्मरति, अपव्याहारात्मकविक्षेपासम्भवात् । निगमयति–तस्मादिति । ' एवमेव ' अध्वर्य्वादिभिः यज्ञसम्प्रदानक्रमेण ' यज्ञः ' ' भर्तव्यः ' पोषयितव्यः ॥ १५ ॥

आश्रावणादिपञ्चकमन्त्रान् प्रशंसति–ता वा इति । व्याह्रियन्त इति ' व्याहृतयः ' वाक्यानि । तानि आश्रा-

---

१–अन्तर्यामोऽप्युपलिर्देशः इत्यर्थः । २–" उपाकृत उद्गातारः आहानुपेयात् " इति का० श्रौ० सू० ९ । ११ । १८ । ३–" हेतोवषट्कारात् " इति का० श्रौ० सू० ९ । १२ । १० ।

( त्रा ) तासा१ꣳ सप्तदशाक्षराणि । सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञ ऽएषैका यज्ञस्य मात्रैषा सम्पत् ॥ १७ ॥

( दो ) ओ श्रावयेति वै देवाः । पुरोवात ꣳ ससृजिरेऽस्तु श्रौषडित्यभ्राणि समप्लावयन्यजेति विद्युतं ये यजामह ऽइति स्तनयित्नुं वषट्कारेणैव प्रावर्षन् ॥ १८ ॥

( न्त्म ) स यदि वृष्टिकामः स्यात् । ( घ ) यदीष्ट्या वा यजेत दर्शपूर्णमासयोर्वैव ब्रूयाद्वृष्टिकामो वा अस्मीति तत्रो ऽध्वर्युं ब्रूयात्पुरोवा-

---

मद्दे,' ' वौषट् ' इति । पाङ्क्तो यज्ञः, पाङ्क्तः पशुः, पञ्चर्तवः संवत्सरस्य । एषैका यज्ञस्य मात्रा, एषा सम्पत् ॥ १६ ॥

तासां सप्तदशाक्षराणि । सप्तदशो वै प्रजापतिः । प्रजापतिर्यज्ञः । एषैका यज्ञस्य मात्रा, एषा सम्पत् ॥ १७ ॥

' ओ श्रावय ' इति वै देवाः पुरोवातं ससृजिरे । ' अस्तु श्रौषट् ' इति अभ्राणि समप्लावयन् । ' यज ' इति विद्युतम् । ' ये यजामहे ' इति स्तनयित्नुम् । वषट्कारेणैव प्रावर्षन् ॥ १८ ॥

स यदि वृष्टिकामः स्यात्, यदीष्ट्या वा यजेत,—दर्शपूर्णमासयोर्वैव ब्रूयाद्—" वृष्टिकामो वा

---

यजेत्यादिकानि । पञ्चसंख्यान्यस्ति, यज्ञोऽपि ' पाङ्क्तः '; धानाः करम्भ—इत्यादिहविर्गतपञ्चसंख्यायोगात् । अतः संख्यासाम्यद्वारा व्याहृतिपञ्चको यज्ञोऽस्तु, ततः किमित्यत आह्—पाङ्क्तः पशुरित्यादिना । पञ्चास्य पादाः, शिर एकमिति वा, लोमत्वङ्मांसास्थिमज्जभेदेन वा—पशोः पाङ्क्तत्वम् । हेमन्तशिशिरयोरेकत्वेन ' पञ्चर्तवः संवत्सरस्य ' अयं यज्ञो व्याहृतिपञ्चकद्वारा पशुसंवत्सररूपाभ्यां शब्दाभ्यां परिमितो भवतीत्यर्थः । ' एषा ' पञ्चसंख्यारूपात्मिका ' यज्ञस्य ' ' एका ' ' मात्रा ' इयत्ता । प्रकारान्तरमेवेत्युक्तम्—एषा सम्पदिति । संख्याद्वारा सम्पादितसमृद्धिर्यज्ञस्य विगुणत्वमित्यर्थः ॥ १६ ॥

आश्रावणादिकं सप्तदशसंख्याकाक्षराणामाकारेण प्रशस्य, तद्गताक्षरसंख्ययापि प्रशंसति—तासामिति । " ओ श्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः " इति सप्तदशाक्षरता; प्रजापतिरपि मासर्तुगतसंख्यया सप्तदशः । यज्ञस्य प्रजापतिरूपत्वाद्यज्ञोऽपि सप्तदशः । ' एषा ' अक्षरसंख्या प्रजापतिरूपत्वात्मकत्वाद्यज्ञस्य ' सम्पत् ' ॥ १७ ॥

विहितस्याश्रावणादिपञ्चकस्य वृष्ट्याख्यफलस्य तत्र विशेषं विवक्षुस्तदुपोद्घातमाह—ओ श्रावयेतीति । ' अस्तु श्रौषट् '—' इति ' अनेन ' अभ्राणि ' उदक—सम्भरणसामर्थ्यान् मेघान् ' समप्लावयन् ' सर्वत्र—व्याप्तानकुर्वन् । ' ससृजिरे '—इति सर्वत्र सम्बन्धः । एवमुत्तरत्रापि उद्देशिनामनुद्देशिनां च पूर्वपूर्वभावेन उत्तरोत्तरानुत्पत्तौ कार्य-कारणभावाभिधानम् । अत उक्तौपरीत्येन तथा शङ्कनीयम् । स्तनयित्नुशब्दः स्तनयतीति व्युत्पत्त्या मेघवाची, तथाऽपि तस्य पृथगभिधानादत्र स्तननमात्रमभिप्रेतम् ॥ १८ ॥

अथोपोद्घातिकमाह—स यदीति । ' सः ' यजमानो ' यदि वृष्टिकामः स्यात् '; स एव ' यदीष्ट्या ' सोमो-

---

१-पञ्चाक्षरत्वमीति पुस्तके प्रतिभाति । २-" धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्येत्येव वै यज्ञो हविष्पङ्क्तिः " इति ( ऐ० ब्रा० २. ३. ९ ) ३-" सप्तदशो वै प्रजापतिः द्वादश मासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन तावान्संवत्सरः संवत्सरः प्रजापतिः " इति ऐ. ब्रा. १।१।१।४—श० ३।११। पा० सू० ६।४।५५।

तश्च विद्युतञ्च मनसा ध्यायेत्यभ्राणि मनसा ध्यायेत्यग्नीधꣳस्तनयित्नुञ्च वर्षञ्च मनसा ध्यायेति होतारꣳ सर्वाण्येतानि मनसा ध्यायेति ब्रह्माणं वर्षति हैव तत्र यत्रैवमृत्विजः संविदाना यज्ञेन चरन्ति ॥ १९ ॥

(न्त्यो) ओ श्रावयेति वै देवाः । (०) विराजमभ्याजुहुवुरस्तु श्रौषडिति वत्समुपावासृजन्यजेत्युदनयन्ये यजामह ऽइत्युपासीदन्वषट्कारेणैव विराजमदुहतेयं वै विराडस्यै वा एष दोह ऽएवꣳ ह वा ऽअस्मा ऽइयं विराट्सर्वान्कामान्दुहे य ऽएवमेतं विराजो दोहं वेद ॥ २० ॥ ३ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ( ५, २, ) ॥

---

अस्मि" इति । तत्रो अध्वर्युं ब्रूयात्—'पुरोवातं च विद्युतं च मनसा ध्याय' इति । 'अभ्राणि मनसा ध्याय' इति अग्नीधम् । 'स्तनयित्नुं च वर्षं च मनसा ध्याय' इति होतारम् । ' सर्वाण्येतानि मनसा ध्याय ' इति ब्रह्माणम् । वर्षति हैव तत्र—यत्रैवम् ऋत्विजः संविदाना यज्ञेन चरन्ति ॥ १९ ॥

' ओ श्रावय ' इति वै देवाः विराजमभ्याजुहुवुः । 'अस्तु श्रौषट्' इति वत्समुपावासृजन् । 'यज' इति उदनयन् । ' ये यजामहे ' इति उपासीदन् । वषट्कारेणैव विराजमदुहत । इयं वै विराट्, अस्यै वा एष दोहः । एवं ह वा अस्मै इयं विराट् सर्वान् कामान् दुहे—य एवमेतं विराजो दोहं वेद ॥२०॥

---

दिकया फलान्तरसाधनभूतया ' यजेत ', तत्र प्रकृतिभूतयो ' दर्शपूर्णमासयोर्वा एव ब्रूयात् ' ऋत्विज ' वृष्टिकाम ' अहम् ' अस्मीति ' । क प्रति किं ब्रूयादिति तद्विमज्याह—तत्रो इत्यादिना । ' तत्र ' तस्मिन्नेव कर्मणि ' अध्वर्युम् ' ' ब्रूयात् ', आश्रावणसमये पुरोवातविद्युतोर्ध्यानं ' मनसा कुर्यात् ' इति । मनोव्यतिरेकेण ध्यानासम्भवाद्, एकाग्रमना इत्यर्थः । एवमुत्तरवाक्येष्वपि योज्यम् । आग्नीध्रहोत्रो प्रत्येकस्य व्याहृतिद्वये सम्भवाद् एकैकस्य द्वयोर्द्वयोर्ध्यानम् । " सर्वेत्रैक्षा "—इति ( ऐ० ब्रा० ५ । ५ । ८ ) ब्रह्मण सर्वकर्तव्यानुसन्धानस्मरणात् सर्वविषयध्यानाभिधानम् । एवमेकैकं ध्याने सति वृष्टिफलं नियतमेवेत्याह—वर्षति हैवेति । ' संविदाना ' फलविषये परस्परैकमत्यं प्राप्ताः ॥ १९ ॥

प्रकारान्तरेणाश्रावणादिकं प्रशंसति—ओ श्रावयेतीति । चरुपुरोडाशादिना विशेषेण राजत इति ' विराट् ' यज्ञाभिका पृथिवी, सा धेनुत्वेन प्रकल्प्यते, " सा मे दुहां यजमानाय कामान् "—इत्यादिमन्त्रेषु दोहनवाचनश्रवणात् । तां विराड्धेनुम् ओ श्रावयेत्यनेनाभिमुखमाह्वयन् । ' वत्समुपावासृजन् ' स्तनपानाय वत्सस्य कण्ठगत पाशं व्यश्लेषयन् । ' यजेति ' अनेन तम् ' उदनयन् ' अपरिमितं वत्समूर्ध्वमुखं सोऽभिमुखमनयन् । ' उपासीदन् ' दोहाय गो समीपे स्थिताः । ' वषट्कारेण ' हविःप्रदानसाधनेन ताम् ' अदुहत ' दोहनेन यज्ञमुदपादयन्नित्यर्थः । विराट्शब्दमाह—इयं वा इति । ' इय ' पृथिव्येव खलु ' विराट् ' उक्तमर्थं समर्थयते—अस्यै वा इति । ' एष ' उक्तो ' दोह ' ' अस्यै वै ' अस्या यज्ञाभिकाया पृथिव्या सम्बन्धी खलु, चरुपुरोडाशादियज्ञसाधनानां तस्या एवोत्पत्ते । उक्तार्थवेदनं प्रशंसति—एवं ह वा इति । ' य ' एतदाश्रावणादिकम् ' एव ' दोहात्मकतया ' वेद ' जानाति 'अस्मै' अस्या उक्तार्थं वेदित्रे 'इय विराट्' पृथिवी 'सर्वान्' धनादिकान् ' कामान् ' ' दुहे ' प्रयच्छतीति ॥ २० ॥ ३ ॥ ( ५ । २ )

इति श्रीसायणाचार्यवि० माधवीये वेदार्थप्र० माध्यन्दिनशतपथब्रा० प्रथमकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥

---

१—इयं वर्षति पुस्तके प्रतिभाति । २—अध्वर्यमहाति पुस्तके प्रतिभाति ।

ऋतवो ह वै प्रयाजाः । ( स्तु ) तस्मात्पञ्च भवन्ति पञ्च ह्यृतवः ॥ १ ॥

( वो ) देवाश्च वा ऽअसुराश्च । ( श्वो ) उभये प्राजापत्याः पस्पृधिरऽएतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरेऽस्माकमयं भविष्यत्यस्माकमयं भविष्यतीति ॥ २ ॥

ततो देवाः । ( ऽ ) अर्चन्तः श्राम्यन्तश्चेरुस्त ऽएतान्प्रयाजान्ददृशुस्तैरयजन्त तैर्ऋतून्त्संवत्सरं प्राजयन्नृतुभ्यः संवत्सरात्सपत्नानन्तरायंस्तस्मात्प्रजयाः प्रजया ह वै नामैतद्यत्प्रयाजा ऽइति तथो ऽएवैष ऽएतैर्ऋतून्त्संवत्सरं प्रजयत्यृतुभ्यः संवत्सरात्सपत्नानन्तरेति तस्मात्प्रयाजैर्यजते ३

" प्रयाजयन्तुः । "

ऋतवो ह वै प्रयाजाः । तस्मात्पञ्च भवन्ति, पञ्च हि ऋतवः ॥ १ ॥

देवाश्च वा असुराश्च उभये प्राजापत्याः पस्पृधिरे-एतस्मिन् यज्ञे प्रजापतौ पितरि संवत्सरे ' अस्माकमयं भविष्यति, अस्माकमयं भविष्यति' इति ॥ २ ॥

ततो देवा अर्चन्तः श्राम्यन्तश्चेरुः, त एतान् प्रयाजान् ददृशुः-तैरयजन्त । तैर्ऋतून् संवत्सरं प्राजयन्-ऋतुभ्यः संवत्सरात् सपत्नानन्तरायन्; तस्मात्प्रजयाः । प्रजया ह वै नामैतद्-यत्प्रयाजाः-इति । तथो एवैष एतैर्ऋतून् संवत्सरं प्रजयति, ऋतुभ्यः संवत्सरात्सपत्नानन्तरेति । तस्मात् प्रयाजैर्यजते ॥ ३ ॥

प्रयाजानुपदेष्टुं विधास्यन्, तदादौ तद्गतां सङ्ख्यां विधत्ते-ऋतवो ह वा इति । यस्माद् ' ऋतवः ' हेमन्तशिशिरयोरैक्येन ' पञ्च ' अतस्तदात्मका अपि ' प्रयाजाः ' ' पञ्च ' कर्तव्याः ॥ १ ॥

निर्वचनद्वारेण प्रशंसितुमाख्यायिकामाह-देवाश्चेति । स्पर्धाया विषयं दर्शयति-एतस्मिन्निति- । 'एतस्मिन्' दर्शपूर्णमासात्मके ' यज्ञे ' ' प्रजापतौ '; आघारवत्त्वादौ धौवदिव्यादिसंज्ञत्वात्मत्वस्य प्रजापतेर्यज्ञरूपत्वाद्-यज्ञे प्रजापतौ-इति सामानाधिकरण्यम् । स च सर्वोत्पादकत्वात् 'पिता'; तस्य च ' संवत्सरः प्रजापतिः ' "सोऽस्य सर्वस्य प्रजनयिता" च इति श्रुतेः ( ऐ. ब्रा. २।२।७; २।१।७ ) संवत्सरात्मकत्वम् । उक्तरूपे प्रजापतौ ' अयमस्माकमेव भविष्यति, अस्माकमेवेति ' स्पर्द्धामकुर्वन् ॥ २ ॥

तत इति । ते 'देवाः' 'अर्चन्तः' तमूजयन्तः, ' श्राम्यन्तः ' आत्मानं क्लेशयन्तः ' चेरुः ' अन्वतिष्ठन्,-तत्साधनमन्वतिष्ठन् । " तत एतान् प्रयाजान् [1] प्रजापतिजयलाभोपायत्वेन दृष्ट्वा, ' तैः ' इष्ट्वा, तत्कालभूतान् ' ऋतून् ', तद्द्वारा ' संवत्सरं ' च प्राजयन् । जितेभ्यस्तेभ्यः सकाशात् स्वसपत्नान् असुरान् विरहितान् अकुर्वन् । 'तस्मात्' प्रजयसाधनत्वादेते ' प्रजया-प्रजयाः' इत्येतदस्ति, एतन्नामतः ' प्रयाजाः ' एतु । यथा देवाः, ' तथा ' एव ' एषः ' इदानींतनोऽपि यजमानः ' एतैः ' प्रयाजैः ऋतुसंवत्सरजयद्वारा स्वशत्रून् ऋतुसंवत्सरैर्व्यवहितान् करोति ॥ ३ ॥

१-समिधः, तनूनपात्, इडः, बर्हिः, स्वाहाकाराः-इति पञ्च प्रयाजाः । द्वादशवर्षरैवतास्तु पर्वताः प्रयाजा भवन्ते ॥

ते वा ऽआज्यहविषो भवन्ति । वज्रो वा ऽआज्यमेतेन वै देवा वज्रेणाज्येनऽर्तूंत्संवत्सरं प्राजयन्नृतुभ्यः संवत्सरात्सपत्नानन्तरायंस्तथो ऽएवैष ऽएतेन वज्रेणाज्येनर्तूंत्संवत्सरं प्रजयत्यृतुभ्यः संवत्सरात्सपत्नानन्तरेति तस्मादाज्यहविषो भवन्ति ॥ ४ ॥

( न्व्ये ) एतद्वै संवत्सरस्य स्वं पयः । ( यो ) यदाज्यं तत्स्वेनैवैनमेतत्पयसा देवाः स्व्यकुर्वत तथो ऽएवैनमेष ऽएतत्स्वेनैव पयसा स्वीकुरुते तस्मादाज्यहविषो भवन्ति ॥ ५ ॥

स यत्रैव तिष्ठन्प्रयाजेभ्य ऽआश्रावयेत् । ( त ) तत ऽएव नापक्रामेत्संग्रामो वा ऽएष संनिधीयते यः प्रयाजैर्यजते यतरो वै संयत्तयोः पराजयतेऽप वै स क्रामत्यभितरामु वै जयन्क्रामति तस्मादभितरामभितरामेव क्रामेदभितरामभितरामाहुतीर्जुहुयात् ॥ ६ ॥

---

ते वा आज्यहविषो भवन्ति । वज्रो वा आज्यम्, एतेन वै देवा वज्रेणाज्येन ऋतून् संवत्सरं प्राजयन्–ऋतुभ्यः संवत्सरात् सपत्नान् अन्तरायन्, तथो एवैष एतेन वज्रेणाज्येन ऋतून् संवत्सरं प्रजयति–ऋतुभ्यः संवत्सरात् सपत्नान् अन्तरेति । तस्मादाज्यहविषो भवन्ति ॥ ४ ॥

एतद्वै संवत्सरस्य स्वं पयः–यदाज्यम् । तत् स्वेनैवैनमेतत्पयसा देवाः स्व्यकुर्वत । तथो एवैनमेष एतत् स्वेनैव पयसा स्वीकुरुते । तस्मादाज्यहविषो भवन्ति ॥ ५ ॥

स यत्रैव तिष्ठन् प्रयाजेभ्य आश्रावयेत्, तत एव नापक्रामेत् । संग्रामो वा एष संनिधीयते–यः प्रयाजैर्यजते यतरो वै संयत्तयोः पराजयते–अप वै स क्रामति, अभितरामु वै जयन् क्रामति । तस्मादभितराम[illegible]भितरामेव क्रामेत्, अभितरामभितरामाहुतीर्जुहुयात् ॥ ६ ॥

---

ते वा इति । [illegible] ' इति ' [illegible] । [illegible] ' [illegible] ' [illegible] । ' तथो '–[illegible] ॥ ४ ॥

[illegible]–एतद्वा इति । आज्यमिति [illegible], ' एतद् ' [illegible] ' स्व पयः ' । [illegible] । ' तद् ' तस्माद् [illegible] ' पूर्वम् ' ' एन ' [illegible] ' स्वेनैव ' [illegible] ' पयसा ' ' स्व्यकुर्वत ' [illegible] । तथा ' एवैनमेष ' [illegible] प्रयाजाज्येन यजन् [illegible] करोति । [illegible] ॥ ५ ॥

[illegible]–स यत्रैवेति । ' [illegible] ' [illegible] ' यत्रैव ' [illegible] ' आश्रावयेत् ' ' तत ' [illegible] ' [illegible] ' । [illegible]–संग्रामो वेति । ' य प्रयाजैर्यजते ' [illegible]

---

१ " [illegible] " [illegible] २।६।१०।
२–[illegible] पा० ।

( च ) तद्‌ तथा न कुर्यात् । ( छ ) यत्रैव तिष्ठन्प्रयाजेभ्य ऽआश्रावयेत्तत ऽएव नापक्रामेद्यत्रो ऽएव समिद्धतमं मन्येत तदाहुतीर्जुहुयात्समिद्धहोमेन ह्येव समृद्धा ऽआहुतयः ॥ ७ ॥

स ऽआश्राव्याह । समिधो यजेति तद्वसन्त ँ् समिन्धे स वसन्तः समिद्धोऽन्यानृतून्त्समिन्ध ऽऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति तद्वै खलु सर्वानृतून्निराहाथ यज-यजेत्येवोत्तरानाहाजामिताये जामि ह कुर्याद्यत्तनूनपातं यजेडो यजेति ब्रूयात्तस्माद्यज-यजेत्येवोत्तरानाह ॥८॥

तद्‌ तथा न कुर्यात् । यत्रैव तिष्ठन् प्रयाजेभ्य आश्रावयेत्-तत एव नापक्रामेत्; यत्रो एव समिद्धतमं मन्येत-तदाहुतीर्जुहुयात् । समिद्धहोमेन ह्येव समृद्धा आहुतयः ॥ ७ ॥

" उत्तरः प्रैषः । "

स आश्राव्य आह-'समिधो यज ' इति । तद् वसन्तं समिन्धे, स वसन्तः समिद्धो अन्यान् ऋतून् समिन्धे, ऋतवः समिद्धाः प्रजाश्च प्रजनयन्ति, ओषधीश्च पचन्ति । तद्वै खलु सर्वानृतून् निराह । अथ ' यज यज ' इत्येव उत्तरानाह-अजामितायै । जामि ह कुर्याद्-यत् ' तनूनपातं यज, इडो यज ' इति ब्रूयात् । तस्माद्यज यजेत्येवोत्तरानाह ॥ ८ ॥

' सङ्ग्रामः सन्निविशते ' अतो युद्धाय ' सङ्गतयोः ' मध्ये ' यः पराजयते ' , ' सोऽपक्रामति ' पश्चात् पलायते । तस्मादपक्रमणं न युक्तमित्यर्थः ।

अथ पुरोऽभिक्रमणपक्षमुपन्यस्य निराकरोति-अभितरामिवेति । ' जयन् ' कश्चिज्जिगीषुः ' अभितरामिव ' शत्रोरत्यन्तमभिमुखं खलु ' क्रामति ' यस्मादेवं ' तस्मात् ' प्रयाजमभिमुखमभिमुखमीषदीषत्पुरस्तादाक्रामेत् । आक्रमणानुसारेणाहुतावपि ईषदीषत्पुरस्ताद्धोतव्य ' जुहुयात् ' ॥ ६ ॥

अमु पक्षं निषेधति-तद्विति । तर्हि कथमित्याशङ्क्य पूर्वोक्तमेव पक्षं निगमयति-यत्रैवेति । आश्रावणस्य प्रदानाहुतस्य तयोः प्रदेशैक्यलाभादित्यभिप्रायः । पक्षान्तरमाह-यत्रो एवेति । आहवनीयमध्ये यस्मिन्नेव प्रदेशेऽग्निं प्रज्वलितं मन्येत, तत्र यथापि ' आहुतीर्जुहुयात् ' । ' हि ' यस्मात् समिद्धाग्निदेशहोमात् ' आहुतयः ' अपि ' समिद्धाः ' प्रदीप्ताः , फलजननसमर्थाः स्युः, अतोऽयमेव पक्षः श्रेयान् ॥ ७ ॥

आश्रावणानन्तरं कर्तव्यमाह-स इति । हे होतः ! समिन्नामिका अग्निमूर्तीः प्रति ताभ्यां यागाय याज्यां पठेति प्रैषार्थः । तेन प्रैषेण साक्षाद् ' वसन्तम् ' एव ' समिन्धे ' दीप्तं करोति । न केवलं तस्यैव समिन्धनम्, अपि तु तद्द्वारा सर्वेषामप्यृतूनां समिन्धनं कृतं भवति । तथा च सति सर्वे ऋतवः स्व-स्व-कालोचिताः ' प्रजाः ' सर्वा अप्युत्पादयन्ति, तदुपजीवनाय ' ओषधीश्च पचन्ति ' । तद्वैवेति । यस्मादेव कारणात् वसन्तसमिन्धनेन स्वयमपि समिद्धाः सन्तः प्राण्युत्पादनमोषधिपाकं चैव कुर्वन्ति, तस्माद्वसन्तः समिद्धोऽन्यान् ऋतून् समिन्ध इति ' सर्वान् ऋतून् निराह ' । समिद्यागवदितरेषामपि नामनिर्देशपूर्वकत्वप्रसक्तौ तन्निवारयति-अथ यजयजेति । तदनिर्देशस्य प्रयोजनमाह-अजामितायै इति । अनतिरेकाय । " जाम्यातिरेकनाम "-इति यास्कः

१-' ध्रुवस्तिष्ठन् ' ( श्रौ० सू० ३. ३७ ) ' पूर्वे पूर्वे वाभिक्रमम् ' ( श्रौ० सू० ३. ३८ ) । २-पुनरुक्तनामेत्यर्थः । इति वृत्तिः । " जामि वा एतद्यज्ञे क्रियते यत्समानीभ्यामृग्भ्यां समानेऽहन्यजति " इति ऐ. ब्रा. ३ । ५ । ३ ।

स वै समिधो यजति । व्वसन्तो वै समिद्वसन्तमेव तद्देवा ऽअवृञ्जत व्वसन्तात्सपत्नानन्तरायन्वसन्तम्वेवैष ऽएतद्वृङ्क्ते व्वसन्तात्सपत्नानन्तरेति तस्मात्समिधो यजति ॥ ९ ॥

(त्य) अथ तनूनपातं यजति । ग्रीष्मो वै तनूनपाद्ग्रीष्मो ह्यासां प्रजानां तनूस्तपति ग्रीष्ममेव तद्देवा ऽअवृञ्जत ग्रीष्मात्सपत्नानन्तरायन्ग्रीष्मम्वेवैष ऽएतद्वृङ्क्ते ग्रीष्मात्सपत्नानन्तरेति तस्मात्तनूनपातं यजति ॥ १० ॥

( त्य ) अथेडो यजति । व्वर्षा वा ऽइड इति हि व्वर्षा ऽइडो यदिदं क्षुद्रᳪ

"प्रयाजब्राह्मणम्" ।

स वै ( १ ) "समिधो" यजति । वसन्तो वै समिद् । वसन्तमेव तद्देवा अवृञ्जत—वसन्तात् सपत्नानन्तरायन् । वसन्तमु एवैष एतद् वृङ्क्ते—वसन्तात् सपत्नानन्तरेति । तस्मात्समिधो यजति ॥ ९ ॥

अथ ( २ ) "तनूनपातं" यजति । ग्रीष्मो वै तनूनपाद्—ग्रीष्मो हि आसां प्रजानां तनूः तपति । ग्रीष्ममेव तद्देवा अवृञ्जत—ग्रीष्मात् सपत्नानन्तरायन् । ग्रीष्ममु एवैष एतद् वृङ्क्ते—ग्रीष्मात् सपत्नानन्तरेति । तस्मात्तनूनपातं यजति ॥ १० ॥

अथ ( ३ ) "इडो" यजति । वर्षा वा इडः । इति हि वर्षा इडः—यदिदं क्षुद्रं सरीसृपं

( नि० ४. ३. ४ ) एकस्मिन् प्रथमे प्रयाजे नामनिर्देशे सतीतरेषामप्यूहयितुं शक्यत्वेन निर्देशप्रायत्वात् पुनर्नामनिर्देशे 'जामि' भवेत् । जामि वाक्यमुदाहृत्य प्रदर्शयति—जामि हेति । अतस्तनूनपात्प्रभृतीन् 'यज—यजेति' एव ब्रूयात् ॥ ८ ॥

'ऋतवो वै' इत्यत्र सङ्ख्यातो विहिता ये पञ्च प्रयाजा, तेष्वेकैकं विभाय प्रशंसति—स वै समिध इत्यादिना । अत्र समिदादीनां वसन्तादीनामृतूनां सङ्ख्यासाम्यमेव साधारणम्, कारणविशेषस्तु तत्र प्रदर्शते—वसन्तो वा इत्यादि । वसन्तेऽपि निखिलवृक्षाणां कुसुमाद्युद्गमेन प्रदीप्तताऽस्तीति समिधो वसन्तत्वाभिधानम् । अत्र 'तत्' तेन समिद्यागेन 'वसन्तमेव अवृञ्जत' स्वैर्नैव्यत्वादसुरेभ्यस्तद्वर्जितमकुर्वन् । तस्मात् 'वसन्तात्' 'सपत्नान्' असुरान् अन्तरायन् । यदैषा नास्ति, तेन तेऽन्तर्हिता इति प्रसिद्धम् ।

पुरातनवृत्तान्तप्रदर्शनस्य प्रयोजनमाह—वसन्तमिति । 'उ' अपि च, इदानीमपीत्यर्थः । 'एतत्' एतेन समिद्यागेन 'वसन्तमेव वृङ्क्ते' वर्जयति, स्वसपत्नेभ्य इत्यर्थः । सिद्धमन्यत् । एवमुत्तरवाक्यान्यपि योज्यानि ॥ ९ ॥

अथ तनूनपातमित्यादि । ग्रीष्मस्य तनूनपात्साम्यं दर्शयति—ग्रीष्मो हीति । अयं सकलप्रजाशरीरतापकत्वेन तनूनां पालकत्वात् तनूनपात्त्वम्, अतोऽर्थेन साम्याद् ग्रीष्मस्तनूनपात् । शिष्टं पूर्ववत् ॥ १० ॥

अथेड इत्यादि । इड इत्येनदेवता यजेत । इडो वर्षात्वेनोपचारे क्षीणं बहुत्वमेव वीजम् । उक्त

१—"क्षुद्रं स" इति काण्वशाखापाठः । २—'यजयजेति प्रैषम्' ( श्रौ० सू० ३ ३६ ) । ३—'पञ्च प्रयाजान्यजतीय पञ्चमस्था प्रयाजानमुख्य तिष्ठेत् । नवप्रयाजान्यजतीति, एकादश प्रयाजान्यजतीति, नवैकादशप्रयाजावस्था योनिर्देशो सख्या व्याख्येनैव पूर्णाय" इति श० ब्रा० ( का० श्रौ० सू० ३ । २ । १८ ) ४—अत्रत्यसमिद्व्याख्यानाद् यास्कः "यज्ञेध्म इति शाकपूणिः "नि० ८ । २ । २ । ५—'तनूनपादाज्यमित्याह यास्कः "आज्यमिति कात्थक्य अग्निरिति शाकपूणि "इति नि० ८ । २ । २ ।

सरीसृपं ग्रीष्महेमन्ताभ्यां नित्यक्तं भवति तद्वर्षा ऽईडितमिवान्नमिच्छमानं चरति तस्माद्वर्षा ऽइडो वर्षा ऽएव तद्देवा ऽअवृञ्जत वर्षाभ्यः सपत्नानन्तरायन्वर्षा ऽउ ऽएवैषु ऽएतद्वृङ्क्ते वर्षाभ्यः सपत्नानन्तरेति तस्मादिडो यजति ॥ ११ ॥

( त्यु ) अथ बर्हिर्यजति । शरद्वै बर्हिरिति हि शरद्बर्हिर्या ऽइमा ऽओषधयो ग्रीष्महेमन्ताभ्यां नित्यक्ता भवन्ति ता वर्षा वर्द्धन्ते ताः शरदि बर्हिषो रूपं प्रस्तीर्णाः शेरे तस्माच्छरद्बर्हिः शरदमेव तद्देवा ऽअवृञ्जत शरदः सपत्नानन्तरायञ्छरदम्वेवैषु ऽएतद्वृङ्क्ते शरदः सपत्नानन्तरेति तस्माद्बर्हिर्यजति ॥ १२ ॥

( त्यु ) अथ स्वाहा—स्वाहेति यजति । ( त्यु ) अन्तो वै यज्ञस्य स्वाहा-

---

ग्रीष्महेमन्ताभ्यां नित्यक्तं भवति—तद् वर्षा ईडितमिवान्नमिच्छमानं चरति—तस्माद्वर्षा इडः। वर्षा एव तद् देवा अवृञ्जत—वर्षाभ्यः सपत्नानन्तरान् । वर्षा उ एवैष एतद् वृङ्क्ते—वर्षाभ्यः सपत्नानन्तरेति। तस्मादिडो यजति ॥ ११ ॥

अथ ( ४ ) बर्हिः यजति । शरद्वै बर्हिः । इति हि शरद् बर्हिः—या इमा ओषधयो ग्रीष्महेमन्ताभ्यां नित्यक्ता भवन्ति, ता वर्षा वर्द्धन्ते, ताः शरदि बर्हिषो रूपं प्रस्तीर्णाः शेरे—तस्मात् शरद्बर्हिः । शरदमेव तद्देवा अवृञ्जत—शरदः सपत्नानन्तरायन् । शरदम्वेवैष एतद् वृङ्क्ते—शरदः सपत्नानन्तरेति । तस्माद्बर्हिर्यजति ॥ १२ ॥

अथ ( ५ ) "स्वाहा—स्वाहा"—इति यजति । अन्तो वै यज्ञस्य स्वाहाकारः, अन्त ऋतूनां

---

मान्यं समर्थयते—इति हीति । 'हि' एव खलु 'इडो वर्षाः' । कथमिति तत्राह—'यदिदं क्षुद्रकम्' प्राणिजातमित्यर्थः । 'सरीसृप' कृकलासगोधादिकम् । 'ग्रीष्महेमन्ताभ्यां' निमित्ताभ्यां 'नित्यक्त' नितरां परित्यक्तशरीरं क्षीणं 'भवति'; हिमे सर्वपदार्थानां शमितार्हत्वात्, ग्रीष्मे रसानां शोषणादिति भावः । 'तत्' सर्वं 'वर्षाः' द्वितीयाबहुवचनं, ताः ताः—प्रति 'ईडितमिव' अहो क्लिष्टप्रायं सदिदानीं पुनर्धेष्ठत इति सर्वैः प्रशंसितमिव 'अन्न' स्वोचितं तृणजलादिरूपम् 'इच्छमानम्' इच्छां कुर्वत्, इतस्ततः 'चरति'; वर्षासु तृणजलादिसमृद्धिसम्भवात् । यस्मादेव 'तस्मात्' वर्षाणामिडत्वमुक्तमित्यर्थः । इष्यत इतीडिति—इड्शब्दव्युत्पत्तेर्वर्षास्वपि सम्भवात् । शिष्टं पूर्ववत् ॥ ११ ॥

अथ बर्हिरित्यादि । यथा इति । उक्तप्रकारेण विनष्टाः, ता 'ओषधयः' वर्षासु प्रवृद्धाः सत्यः 'शरदि' प्राप्तायां 'बर्हिषः' आस्तीर्णस्य 'रूपम्' प्राप्नुवन्ति । तत् कुत इत्यत आह—'आस्तीर्णाः' अनुक्रमणमामान्येनाऽऽस्तृतदर्भवत् 'शेरे' शेरते । 'तस्मात्' उपपादिताद्धेतोः; शरद् बर्हिः ॥ १२ ॥

अथ स्वाहेत्यादि । अन्त्यप्रयाजे 'स्वाहाग्निम्' 'स्वाहा सोमम्' इति ( तै. ब्रा. ३।५।५।१ )

---

१—इड्स्व्याख्यानमाह यास्कः "इळ ईट्टेः स्तुतिकर्मण इन्धतेर्वा" इति निरु० ८।२।४। २—बर्हिर्व्युत्पत्तिमाह यास्कः "बर्हिः परिबर्हणात्" इति निरु० ८।२।५।

कार्योऽन्त ऋतूनाꣳ हेमन्तो व्वसन्ताद्धि परार्द्ध्योऽन्तेनैव तदन्तं देवा
ऽअभ्यजयन्नन्तेनान्तात्सपत्नानन्नुदायन्नन्तो ह्येवैष ऽएतदन्तं वृङ्क्तेऽन्ते-
नान्तात्सपत्नान्नुदतेति तस्मात्स्वाहा—स्वाहेति यजति ॥ १३ ॥

तद्वा ऽएतत् । (ङ) व्वसन्त ऽएव हेमन्तात्पुनरसुरेतस्माद्ध्येष पुनर्भ-
वति पुनर्ह वा ऽअस्मिँल्लोके भवति य ऽएवमेतद्वेद ॥ १४ ॥

स वै व्यन्तु वेत्विति यजति । (च) अजामितायै जामि ह कुर्याद्य-
द्व्यन्तु व्यन्त्विति वैव यजेद्वेतु वेत्विति वा व्यन्त्विति वै योषा वेत्विति
वृषा मिथुनमेवैतत्प्रजननं क्रियते तस्माद्व्यन्तु वेत्विति यजति ॥ १५ ॥

---

हेमन्तः—वसन्ताद्धि परार्द्ध्यः । अन्तेनैव तदन्तं देवा अभ्यजयन्—अन्तेनान्तात् सपत्नानन्नुदायन् । अन्तो ह्येष एतदन्तं वृङ्क्ते—अन्तेनान्तात् सपत्नान्नुदतेति । तस्मात् स्वाहा—स्वाहेति यजति ॥ १३ ॥

तद्वा एतद्—वसन्त एव हेमन्तात् पुनरसुः, एतस्माद्ध्येव पुनर्भवति । पुनर्ह वा अस्मिन् लोके भवति—य एवमेतद् वेद ॥ १४ ॥

स वै 'व्यन्तु, वेतु' इति यजति—अजामितायै । जामि ह कुर्याद्—यद् 'व्यन्तु—व्यन्तु'—इति वैव यजेद् 'वेतु' वेतु इति वा । व्यन्तु—इति वै योषा, वेतु—इति वृषा मिथुनमेवैतद् प्रजननं क्रियते । तस्माद् व्यन्तु वेतु—इति यजति ॥ १५ ॥

( त्यु ) अथ चतुर्थे प्रयाजे समानयति बर्हिषि । प्रजा वै बर्ही रेत ऽआज्यं तत्प्रजास्वेवैतद्रेतः सिच्यते तेन रेतसा सिक्तेनेमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते तस्माच्चतुर्थे प्रयाजे समानयति बर्हिषि ॥ १६ ॥

सङ्ग्रामो वा ऽएष सन्निधीयते । यः प्रयाजैर्यजते यतरं वै संयत्तयोर्मित्र-मागच्छति स जयति तदेतदुपभृतोऽधि जुहूं मित्रमागच्छति तेन प्रजयति तस्माच्चतुर्थे प्रयाजे समानयाति बर्हिषि ॥ १७ ॥

यजमान ऽएव जुहूमनु योऽस्मा ऽअरातीयति स ऽउपभृतमनु यजमाना-यैवैतद्द्विषन्तं भ्रातृव्यं बलिᳪं हारयत्युत्तेव जुहूमन्वाय ऽउपभृतमन्व ऽएवं-तदाद्यं बलिᳪं हारयति तस्माच्चतुर्थे प्रयाजे समानयति ॥ १८ ॥

---

अथ चतुर्थे प्रयाजे समानयति बर्हिषि । प्रजा वै बर्हिः, रेत आज्यम् । तद् प्रजास्वेवैतद् रेतः सिच्यते । तेन रेतसा सिक्तेनेमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते । तस्माच्चतुर्थे प्रयाजे समान-यति बर्हिषि ॥ १६ ॥

सङ्ग्रामो वा एष संनिधीयते—यः प्रयाजैर्यजते । यतरं वै संयत्तयोर्मित्रमागच्छति-स जयति । तदेतद्-उपभृतोऽधि जुहूं मित्रमागच्छति—तेन प्रजयति । तस्माच्चतुर्थे प्रयाजे समानयति बर्हिषि ॥ १७ ॥

यजमान एव जुहूमनु योऽस्मा अरातीयति-स उपभृतमनु । यजमानायैवैतद् द्विषन्तं भ्रातृव्यं

---

तैत्तिरीयके " यदुपभृति प्रयाजानुयाजेभ्यस्तदिति " ( तै. ब्रा. ३. ३. ९. ) यद्दुभनार्थमाज्यग्रहण-मुक्तम्, तस्य विभागमाह—अथ चतुर्थं इति । 'चतुर्थे' बर्हिराख्ये ' प्रयाजे ' होतव्ये सति, उपभृतः सकाशात् जुह्वां ' समानयति ' आज्यम् ( " उपभृतो जुह्वामानयति " इति का. श्रौ. सू. ३ । १९ ) एतद् प्रशंसति—प्रजा वा इत्यादिना । प्रजानां पुत्रादिरूपा उपरिवर्हणसम्भवाद् बर्हिष्ट्वम् । तस्यास्य वृष्टिद्वारा प्रजादिरूपे-णोत्पत्तेराज्य रेतः; अतो बर्हिष्यानयनात् ' प्रजासु ' ' रेत ' सिक्तं भवति । ' सिक्तेन रेतसा ' रेतोभूतेना-ज्येन ' इमाः ' परिदृश्यमाना ' प्रजाः ' ' अभ्यावर्तम् ' अभ्यावृत्याभ्यावृत्य कर्मवशाद् देहसम्बन्धं प्राप्नुवन्ति । तस्मादित्युपसंहारः ॥ १६ ॥

जुह्वामुपभृतः प्राप्तमाज्यं मित्रप्राप्त्यात्मना प्रशंसति—सङ्ग्राम इति । ' यः ' च ' प्रयाजैः ' सम्प्रष्टोऽध्वर्युः तेन सङ्ग्राम एव सन्निधापितो भवति । अत. ' संयत्तयोः ' युद्धाय प्रयतमानयोर्मध्ये ' यतरम् ' एव योद्धार ' मित्र ' सखायं साहाय्यं कर्तुम् " आगच्छति ' ' स जयति ' इति लोके प्रसिद्धम्; एवम् ' उपभृतः ' सकाशाद् ' जुहू ' जुहूगतमाज्य ' मित्र ' सद् ' आगच्छति; ' ' तेन ' मित्रप्राप्तिकारणेन ' जयति ' । ' तस्मात् समानयति ' ॥ १७ ॥

यजमान एव जुहूमिति । " अत्रैव जुहूम् "—इत्याज्यानयनार्थवादद्वयम् । " अध्वर्यो ! स्रुचमास्यस्व "—इत्येनस्य ब्राह्मणवद् व्याख्येयम् । उपभृतः सकाशादाज्यस्य आनेताऽध्वर्युः, शत्रोः सकाशात् ' बलिम् ' उपायनद्रव्यमदनीयमन्न च अत्रे यजमानाय प्रदापितवान् भवतीति सङ्ग्रहार्थः ॥ १८ ॥

---

१-इहापि पूर्वं ३ प्र० ५ ब्रा० इत्यत्रस्थाले द्रष्टव्यम् । २-पुरस्तादिहैव १ का० ४ प्र० ५ अ० २ ब्रा० २ कं० द्रष्टव्यम् ।

म्यमाज्यभागꣳ समस्थापयन्त्स्वाहाग्निमिति तद्य ऽएष ऽउभयत्राच्युत ऽआग्नेयः पुरोडाशो भवति तꣳ समस्थापयन् ॥ २२ ॥

( ब्रा ) अथ यथादेवतꣳ स्वाहा देवा ऽआज्यपा ऽइति तत्प्रयाजानुयाजान्त्समस्थापयन्प्रयाजानुयाजा वै देवा ऽआज्यपा जुषाणो ऽअग्निराज्यस्य वेत्विति तदग्निꣳ स्विष्टकृतꣳ समस्थापयन्नग्निर्हि स्विष्टकृत्स ऽएषोऽप्येतर्हि तथैव यज्ञः सन्तिष्ठते यथैवैनं देवाः समस्थापयंस्तस्मादुत्तमे प्रयाजे स्वाहा-स्वाहेति यजति यावन्ति हवीꣳषि भवन्ति विजितमेवैतदनु सर्वं यज्ञꣳ सꣳस्थापयति तस्माद्यदत ऽऊर्ध्वं विलोम यज्ञे क्रियेत न तदाद्रियेत सꣳस्थितो मे यज्ञ ऽइति ह विद्यात्स हैष यज्ञो यातयामेवास यथा वषट्कृतꣳ हुतꣳ स्वाहाकृतम् ॥ २३ ॥

---

समस्थापयन् । ' स्वाहा सोमम् ' इति तद् सौम्यमाज्यभागं समस्थापयन् । स्वाहाग्निमिति-तद्य एष उभयत्राच्युत आग्नेयः पुरोडाशो भवति-तं समस्थापयन् ॥ २२ ॥

अथ यथादेवतम् । ' स्वाहा देवा आज्यपाः ' इति-तद् प्रयाजानुयाजान् समस्थापयन्; प्रयाजानुयाजा वै देवा आज्यपाः । " जुषाणो अग्निराज्यस्य वेतु "-( तै. ब्रा. ३. ५. ६. २ ) इति तदग्निं स्विष्टकृतं समस्थापयन्, अग्निर्हि स्विष्टकृत् । स एषोऽप्येतर्हि तथैव यज्ञः संतिष्ठते-यथैवैनं देवाः समस्थापयन् । तस्मादुत्तमे प्रयाजे स्वाहास्वाहेति यजति । यावन्ति हवींषि भवन्ति,-विजितमेवैतद्-अनु सर्वं यज्ञं संस्थापयति । तस्माद् यदत ऊर्ध्वं विलोम यज्ञे क्रियेत-न तदाद्रियेत; ' संस्थितो मे यज्ञः ' इति ह विद्यात् । स ह एष यज्ञो यातयामेवास-यथा वषट्कृतम्, हुतम्, स्वाहाकृतम् ॥ २३ ॥

---

' समस्थापयन् ' । तत्प्रकारं विभज्य दर्शयति-स्वाहाग्निमितीत्यादिना । उभयत्राच्युत आग्नेयः पुरोडाश इति । "[1] यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" इति श्रुत आग्नेयोऽष्टाकपालः पुरोडाशो दर्शे पौर्णमास्यां च नित्य इत्यर्थः ॥ २२ ॥

अथ यथादेवतमिति । पौर्णमास्याममावास्यायां च विष्णुः, अग्नीषोमौ, प्रजापतिश्चेति विकल्पिता उपांशुयाजदेवताः ( का. श्रौ. सू. ३ । ६७ ) एकादशकपालदेवताः; अग्नीषोमौ अमावास्याया चोभयत्र साधारणोऽष्टाकपालदेवोऽग्निः, इन्द्राग्नी-एकादशकपालदेवता, दधिपयोदेवते इन्द्रमहेन्द्राविति या दर्शपूर्णमास-प्रधानदेवताः सन्ति, ता अनतिक्रम्य ( तत्तद्देवता अनतिक्रम्य ) तत्तद्देवताकं यागं समस्थापयन्नित्यर्थः । अत्र देवतानामनियतत्वात् यथादेवतमिति सङ्ग्रहेणाभिधानम् । ' आज्यपाः ' ' प्रयाजानुयाजा देवाः ' ( ऐ. ब्रा. २ । २ । ८ ) समिदाद्याः स्वाहान्ताः ( ऐ. ब्रा. २ । १ । ४ ) तेभ्य इदं हविः स्वाहुतमस्त्विति तस्यार्थः । " जुषाणो अग्नि " ( तै. ब्रा. ३ । ५ । ६ । २ । ३ ) निरु. ८ । २ । ३ ।

---

1-" विष्णुर्वाऽमावास्यया २हीवाम्नानात् " का. श्रौ. सू.-३ । ३ । २५ । व्यवस्थितविकल्पोऽयम् " उभयत्रोऽग्नीषोमौ अयम्नयनो विष्णुरेति " इति शाखा. १ । ३ । १६-१८ । सान्नाय्ये दर्शके दधिपयसी तदनुतिरिन्द्रमहेन्द्रावेति ।

( न्ते ) ते देवा अकामयन्त । कथं न्विमं यज्ञं पुनराप्याययेमायातयामानं कुर्याम तेनायातयाम्ना प्रचरेमेति ॥ २४ ॥

स यज्जुह्वामाज्यं परिशिष्टमासीत् । ( व्रे ) तेन यज्ञꣳ समस्थापयꣳस्तेनैव यथापूर्वꣳ हवीꣳष्यभ्यघारयन्पुनरेवैनानि तदाप्याययन्नयातयामान्यकुर्वन्नयातयाम ह्याज्यं तस्मादुत्तमं प्रयाजमिष्ट्वा यथापूर्वꣳ हवीꣳष्यभिघारयति पुनरेवैनानि तदाप्याययत्ययातयामानि करोत्ययातयाम ह्याज्यं तस्माद्यस्य कस्य च हविषोऽवद्यति पुनरेव तदभिघारयति

---

ते देवा अकामयन्त—' कथं न्विमं यज्ञं पुनराप्याययेम अयातयामानं कुर्याम, तेनायातयाम्ना प्रचरेम ' इति ॥ २४ ॥

स यद् जुह्वामाज्यं परिशिष्टमासीत्—तेन यज्ञं समस्थापयन्,—तेनैव यथापूर्वं हवींष्यभ्यघारयन्, पुनरेवैनानि तदाप्याययन्, अयातयामान्यकुर्वन् । अयातयाम ह्याज्यम् । तस्मादुत्तमं प्रयाजमिष्ट्वा

---

निरु० १।२।२।१६ । इत्यत्र ' स्विष्टकृदग्नि ' विवक्षितः स्विष्टकृद्यागान्त होमस्यैवागन्तुकत्वात् । तत ' स्विष्टकृत्पर्यन्तं ' तदवसानं यागं ' समस्थापयन् ' इत्यर्थः, सकलस्य यूपानिरपरस्यापि स्विष्टकृद्धोमस्यानुगतत्वात् । सैवा प्रसिद्धिः ' अग्निर्होता ' ' हि ' शब्देनोक्ता ।

विमृश्यान्वाख्यानस्य तात्पर्यमाह—यथैवेति । ' यथा ' कृत्स्नोऽपि ' यज्ञः ' समाप्तो भवति, तथा ' देवाः ' प्रतिपादितप्रकारेणाऽऽप्यायनेन एव ' समस्थापयन् ' । यद्यर्थमाप्यायिकाऽऽत आशङ्किता, तदिदानीं साधयन्नाह—तस्मादिति । यावन्ति हवींषि ' आज्यभागादिस्विष्टकृदन्तानि, तानि सर्वाणि प्रयाजैनैव सम्पादितानि भवति । समापनमस्माह—तस्माद्यदत ऊर्ध्वमिति । ' तस्मात् ' समापनाद्धेतो ' अत ' अन्त्यप्रयाजाद् ' ऊर्ध्वं ' ' विलोमं ' न्यूनं विपरीतप्रकारं वा, यदि ' क्रियते ' तद्विषयमादरं न कुर्यात्, तत्कथं समाप्यामिति चिन्ता न कुर्यादित्यर्थः । किन्तु ' यज्ञः संस्थित ' एव ' इति ' जानीयात् । ' स एष ' उक्तविधो ' यज्ञः ', अयातयामत्व ' मागतमाह एवं ' यथा ' अपेक्षानन्तिक्रमेणैव यतो वषट्कारान्तिम उक्तः कार्मणि, अतो यातयामत्वशङ्का नास्त्यस्य । अपवादाऽशङ्कितस्य वषट्कारान्तस्य वात् ' स एव ' शिष्ट ' एव ' ' यातयाम एव ' निर्गतिमाह एव ॥ २३ ॥

अथ द्वे ह्यामवशिष्टस्य यातयामत्वपरिहारं दर्शयति—ते देवा इति । यज्ञेनाऽऽप्त फलानित्यस्तस्य प्रधान मनुष्यत्व तद गतसारम्भूत् अत कथं न्वपारद्धित इति तथा कामना गतमाह हि ' पुनराप्याययेम ' इति कल्पस्य प्रसङ्ग इति । तमाह—अयातयामानमिति । यामपर्यन्तमवस्थितमन्नादिक यथा नारस भवति, एव मयमपीति गतरस वमाप्यायत्यापि यातयामत्वम् ॥ २४ ॥

अत तदुपायं दर्शयति—स यदिति । ' स '—इत्ययमेको वाक्यालङ्कारार्थः । ' आज्यं ' जुह्वां ' परिशिष्टं ' प्रयाजहोमस्योर्ध्वशिष्टमभूत्, तदयुक्तादन्य दाप अतोऽस्याज्यस्य कश्चिदुपयोग इति तं दर्शयति—तेनेति । ये प्रति यस्य रसो निर्गत, तस्य तत एव हि आप्याययन्मुचितमिति मस्थापितावशिष्टा योगादाप्यायितानि । यथापूर्वमिति । आज्यभागोऽग्नीषोमीयादीनि हविषा पूर्वपूर्वमनतिक्रम्य इत्यर्थः ।

( त्यु ) अथ बर्हिर्यजति । भूमा वै बर्हिर्भूमानमेवैतत्प्रजनयति तस्माद्बर्हिर्यजति ॥ ४ ॥

( त्यु ) अथ स्वाहास्वाहेति यजति । हेमन्तो वा ऽऋतूनाॅं स्वाहाकारो हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते तस्माद्धेमन्म्लायन्त्योषधयः प्र वनस्पतीनां पलाशानि मुच्यन्ते प्रतितरामिव वयाॅंसि भवन्त्यधस्तरामिव वयाॅंसि पतन्ति विपतितलोमेव पापः पुरुषो भवति हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते स्त्री ह वै तमर्द्धं कुरुते श्रियेऽन्नाद्याय यस्मिन्नर्द्धे भवति य ऽएवमेतद्वेद ॥ ५ ॥

देवाश्च वा ऽअसुराश्च । ( श्रो ) उभये प्राजापत्याः पस्पृधिरे ते दण्डैर्धनुर्भिर्न व्यजयन्त ते हाविजयमाना ऽऊचुर्हन्त वाच्येव ब्रह्मन्विजिगीषा-

---

अथ ( ४ ) बर्हिर्यजति । भूमा वै बर्हिः । भूमानमेवैतत् प्रजनयति; तस्माद् बर्हिर्यजति ॥ ४ ॥

अथ ( ५ ) " स्वाहास्वाहा "–इति यजति । हेमन्तो वा ऋतूनां स्वाहाकारः । हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते । तस्माद्धेमन् म्लायन्त्योषधयः, प्र वनस्पतीनां पलाशानि मुच्यन्ते, प्रतितरामिव वयांसि भवन्ति, अधस्तरामिव वयांसि पतन्ति । विपतितलोमेव पापः पुरुषो भवति–हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते । स्त्री ह वै तमर्द्धं कुरुते श्रियेऽन्नाद्याय–यस्मिन्नर्द्धे भवति–य एवमेतद्वेद ॥ ५ ॥

' प्रयाजानुमन्त्रणम् । '

देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे । ते दण्डैर्धनुर्भिर्न व्यजयन्त । ते हाविजयमाना

---

अथ बर्हिरिति । बृंहतेर्वृद्ध्यर्थाद् बर्हिःशब्दः; अतो ' बर्हिर्भूमा ' खलु, अतः प्रजायमानमेनेन बर्हिर्यागेन बहुत्वमुत्पादयति ॥ ४ ॥

अथ स्वाहेत्यादि । यः स्वाहाकाराख्यः प्रयाजः, स ' ऋतूनां हेमन्तः ' अन्तिमत्वसाम्यात् । ' हेमन्तः ' खलु ' इमाः ' सर्वा अपि ' प्रजाः ' स्वकीय ' वश ' प्रापयति; हन्तर्तुर्हि तपातिवर्षणाद्यभावात् । अत एव च यास्को हेमन्तपर्यायं हिमशब्दमिच्छन् व्युदाहरत्–" हिम पुनर्हन्तेर्वा हिनोतेर्वा " ( निरु. ४. ४. ६. ) । वशीकरणप्रकारं स्पष्टं प्रदर्शयति–तस्मादित्यादिना । वशीकृतत्वाद्धेतो: ' हेमन् ' हेमि, हेमन्ते हिमोपघातेन ' ओषधयः ' वनस्पतयश्च म्लाना गलितपर्णाश्च भवन्ति । तथा ' वयांसि ' पक्षिणः ' प्रतितरामिव ' उन्नतं प्रतिकूला इव, हिमोपहतत्वाच्चादुपर्युपरि इत्यर्थः । ' अधस्तरामिव ' पतत्राणां प्रच्छादनादूर्ध्वं कर्तुमशक्ता इव अधः पतन्ति । ' पुरुषः ' सर्वोऽपि ' विपतितलोमेव ' प्रलूनलोमेव कदर्थितात्मो ' भवति ' ॥ ५ ॥

उपसंहरति–हेमन्तो हीति । ' य एवमेतत् ' कृत्स्नमपि हिमवशीकृतत्वं ' वेद ' ' सः ' वेदिता यस्मिन् ' अर्द्धे ' अर्द्धभागे देशे ' भवति ' सः ' तम् ' ' अर्द्धं ' देशं श्रियेऽन्नाद्याय च स्वीकुरुते खलु; स देशो धनकनकादिश्रिया, अन्नेन च समृद्धमन्नदर्शनो भवतीत्यर्थः ॥ ५ ॥

इत्थं प्रयाजान् प्रशस्य तदनुमन्त्रणमन्त्रान् विधातुमाख्यायिकामाह–देवाश्च वा असुराश्चेति । ' प्राज-

चत्वारो ममेतीन्द्रोऽब्रवीत् ( ३ ) अथास्माकं चतस्र इतीतरेऽब्रुवंस्तद्
तन्मिथुनमेवाविन्दन्मिथुनꣳ हि चत्वारश्च चतस्रश्च ॥ १० ॥

पञ्च ममेतीन्द्रोऽब्रवीत् । ( ञ ) तत इतरे मिथुनं नाविन्दन्नो ह्यत ऊर्ध्वं
मिथुनमस्ति पञ्च-पञ्चेति ह्येवैतदुभयं भवति ततोऽसुराः सर्वं पराजयन्त
सर्वस्माद्देवा असुरानजयन्त्सर्वस्मात्सपत्नानसुरान्निरभजन् ॥ ११ ॥

(जंस्तु) तस्मात्प्रथमे प्रयाज इष्टे ब्रूयात् । (३) एको ममेत्येका तस्य यमहं
द्वेष्मीति यद्यु न द्विष्याद्योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म इति ब्रूयात् ॥१२॥

( द्वे ) द्वौ ममेति द्वितीये प्रयाजे । द्वे तस्य योऽस्मान्द्वेष्टि यञ्च वयं
द्विष्म इति ॥ १३ ॥

त्रयो ममेति तृतीये प्रयाजे । तिस्रस्तस्य योऽस्मान्द्वेष्टि यञ्च वयं
द्विष्म इति ॥ १४ ॥

---

' चत्वारो मम ' इतीन्द्रोऽब्रवीत् । अथ ' अस्माकं चतस्रः ' इतीतरेऽब्रुवन् । तद्ध तन्मिथुनमेवाविन्दन् । मिथुनं हि—चत्वारश्च चतस्रश्च ॥ १० ॥

' पञ्च मम ' इतीन्द्रोऽब्रवीत् । तत इतरे मिथुनं नाविन्दन्, नो ह्यत ऊर्ध्वं मिथुनमस्ति—पञ्च-पञ्च इति ह्येवैतदुभयं भवति । ततोऽसुराः सर्वं पराजयन्त, सर्वस्माद् देवा असुरानजयन् । सर्वस्मात्सपत्नानसुरान् निरभजन् ॥ ११ ॥

तस्मात् प्रथमे प्रयाज इष्टे ब्रूयाद्—' एको मम इति । एका तस्य यमहं द्वेष्मि ' इति । यद्यु न द्विष्याद्—' योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः ' इति ब्रूयात् ॥ १२ ॥

' द्वौ मम ' इति द्वितीये प्रयाजे—' द्वे तस्य—योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः ' इति ॥ १३ ॥

' त्रयो मम ' इति तृतीये प्रयाजे—' तिस्रस्तस्य—योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः ' इति ॥१४॥

---

पञ्च ममेतीति । अथ ' इन्द्रः ' ' पञ्च ममेत्यब्रवीत् '; ' ततः ' इतरे ' असुराः ' मिथुनं ' ' नाविन्दन् '; लिङ्गद्वयेऽपि रूपाविशेषात् । अलाभे कारणं श्रुतिरेवाह—नो हीति । हिशब्दसूचितमर्थमाह—पञ्च-पञ्चेति । स्त्रियाः पुंसश्चोभयोरप्यभिधानं पञ्च पञ्चेत्येव, न व्यावर्तको रूपभेदोऽस्ति; ' ततः ' पञ्चप्रभृतीनां मिथुनत्वस्यालाभात् ' असुराः ' ' सर्वं ' विवादास्पदं वस्तु ' पराजयन्त ' जेतुं नाशक्नुवन्नित्यर्थः । अतो ' देवाः ' ' सर्वस्माद् ' अपि जयविषयात् ' असुरान् अजयन् ' । जयशब्दार्थमाह—सर्वस्मात्सपत्नानसुरान्निरभजन्निति ॥ ११ ॥

इदानीमर्थवादसिद्धं प्रयाजानुमन्त्रणमन्त्रान् प्रतिप्रयाजं विभज्य योजयति—तस्मादित्यादिना । यस्मादिन्द्रेणैको ममेत्युक्तम्, असुरैरेका ममेत्युक्तम्, ' तस्मात् ' ' प्रथमे प्रयाजे ' ' एको मम '—इत्यादि ' ब्रूयात् ' । एवं द्वितीयादिष्वपि—' द्वौ मम ', ' द्वे तस्य ' इत्यादि द्रष्टव्यम् । ' यं ' च ' अहं ' ' द्वेष्मि ' अहं यस्य द्वेषं करोमि, ' तस्य ' एका पुत्री स्यादिति ब्रूयादिति प्रथमप्रयाजानुमन्त्रणमन्त्रशेषस्यार्थः । पुत्र्या रक्षणप्रदानादौ बहुतरदुःखसम्भवात् तच्छत्रोराशा स्यात् । यदि कस्मैचिदपि द्वेषं न कुर्यात्, तदा ' योऽस्मानित्यादि

---

१—" एको मम एका तस्य योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म इत्येवं मिथुनैर्यथासङ्ख्यम् " इति का. श्रौ. सू. ३ । ३ । ३ । एते च मन्त्रा मार्जिकस्वरेण पठनीयाः मन्त्रत्वादिति केचित् ।

चत्वारो ममेति चतुर्थे प्रयाजे । चतस्रस्तस्य योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म ऽइति ॥ १५ ॥

पञ्च ममेति पञ्चमे प्रयाजे । न तस्य किंचन योऽस्मान्द्वेष्टि यञ्च वयं द्विष्म ऽइति स पञ्च-पञ्चेत्येव भवन्पराभवति तथास्य सर्वँ संवृङ्क्ते सर्व्वस्मात्सपत्नान्निर्भजति य ऽएवमेतद्वेद ॥ १६ ॥ ५ ॥

इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् [ ५ । ४ ]

पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

'चत्वारो मम' इति चतुर्थे प्रयाजे–'चतस्रस्तस्य–योऽस्मान् द्वेष्टि, य च वयं द्विष्म' इति ॥ १५ ॥

'पञ्च मम' इति पञ्चमे प्रयाजे 'न तस्य किंचन–योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः' इति । स पञ्च पञ्चेत्येव भवन् पराभवति । तथास्य सर्वं संवृङ्क्ते सर्वस्मात् सपत्नान् निर्भजति–य एवमेतद्वेद ॥ १६

---

ब्रूयात् । वस्तुतो द्वेषाभावेऽपि रागादिभिर्द्वेषस्मरणात् तन्निराकर्तुं द्वेषमभिप्रेत्य 'य च वयं द्विष्म' इत्यभिधानम् ॥ १२–१५ ॥

पञ्च ममेतीति । 'पञ्चमे प्रयाजे पञ्च ममेति' वदेत् । पूर्ववत् इमार विपरीतफलकामनया प्रार्थयमाह–न तस्य किंचनेति । तस्य' इत्युक्त शत्रो 'किंचन' पञ्च पुत्रा पञ्च कन्या वा स्युरिति 'न' ब्रूयादित्यर्थः । अमुं पञ्चसंख्याया मिथुनरूपस्य वचनस्यादर्शनादिति भाव । उक्तार्थज्ञान प्रशंसति–पञ्च-पञ्चेत्येवेति । 'सर्वं' 'संवृङ्क्ते' वर्जयति, स्वयं तत्प्राप्नोतीत्यर्थ ॥ १६ ॥ ५ ॥ [ ५ ४ ]

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये

प्रथमकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं

रत्नाभ्धेनुं पञ्चसीरीत्रिदशतरुलताधेनुसौवर्णभूमी ।

रत्नोर्वीं रुक्मवाजिद्विपमहितरथौ सायणे सिद्धनाथा

न्यस्ताणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥

धान्याद्रि चन्दनाद्रि तिलमथकनकं लवणाद्रिं वर्णसुत्य

कार्पासीयं कृपालुर्गुडकृतमचलं बाध्दत राजयुग्मं ।

आज्याख्यं प्राज्यमग्ना लवणमनृणं शार्करं चापरेषां

रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रमार्यः स्वहस्तैः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरंधरेण सायणाचार्येण

विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये प्रथमकाण्डे

पञ्चमाध्यायः समाप्तः ॥ ५ ॥

---

१–चतुर्थेऽपि च कात्यायननाम प्रयाजस्तुतिमन्त्रः, समकस्त भवयान्नद्वेष्टि य च वयं द्विष्म इति' ( श्रौ सू १ । ४५ ) 'एव मिथुनेऽपि' 'एवं' ( श्रौ सू १ । ४६ ) 'न तस्य किंचनेति पञ्चमे' ( श्रौ सू १ । ४७ ) अथ चत्वारुप-म्यप्रयाजानुमन्त्रणविधावपि– किञ्चित्यमानविनियोगावसरो मन्त्रस्त्वयाद इतीच' ( श्रौ सू १ ४८ ) इति । अत्र च भूयानित्यध्याहार्य वक्तव्यमिति । २–काका इमध्य न सन्ति कात्यायनकृतः ।

# अथ प्रथमकाण्डे षष्ठाध्याये प्रथमं ब्राह्मणम् ।

ऋतवो ह वै देवेषु यज्ञे भागमीषिरे । आ नो यज्ञे भजत मा नो यज्ञाद-
न्तर्गतास्त्वेव नोऽपि यज्ञे भाग ऽइति ॥ १ ॥

तद्वै देवा न जज्ञुः । (स्त) त ऽऋतवो देवेष्वजानत्स्वसुरानुपावर्तन्ताप्रिया-
न्देवानां द्विषतो भ्रातृव्यान् ॥ २ ॥

( व्यांन्तं ) ते हैतामेधतुमेधांचक्रिरे । यामेषामेतामनुशृण्वन्ति कृषन्तो
ह स्मैव पूर्वे वपन्तो यन्ति लुनन्तोऽपरे मृणन्तः शश्वद्धैभ्योऽकृष्टपच्या
ऽएवौषधयः पेचिरे ॥ ३ ॥

" प्रयाजानामिष्टौ प्राथम्यम् " ।

ऋतवो ह वै देवेषु यज्ञे भागमीषिरे, आ नो यज्ञे भजत, मा नो यज्ञादन्तर्गत, अस्त्वेव नोऽपि यज्ञे भाग इति ॥ १ ॥

तद्वै देवा न जज्ञुः । त ऋतवो देवेष्वजानत्स्वसुराननुपावर्तन्त—अप्रियान् देवानां द्विषतो भ्रातृव्यान् २
ते हैतामेधतुमेधाश्चक्रिरे—यामेषामेतामनुशृण्वन्ति । कृषन्तो ह स्मैव पूर्वे वपन्तो यन्ति लुनन्तोऽपरे मृणन्तः, शश्वद्धैभ्योऽकृष्टपच्या एवौषधयः पेचिरे ॥ ३ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
अथ वसन्तादिप्रयाजदेवेषु कथमेते सम्बन्ध इति तदुपपादनायाख्यायिकामाह—ऋतवो ह वा इति । 'ऋतवः' पुरा दर्शपूर्णमासादियज्ञे 'भागम्' 'ईषिरे' ऐच्छन् । ते देवान् प्रति अस्मानपि 'यज्ञे' भागिनः कुरुत । 'यज्ञाद्' अस्मान् 'अन्तरितान्' 'मा' कुरुत । अतोऽस्माकम् 'अपि' यज्ञे भागोऽस्त्वित्यब्रुवन् ॥ १ ॥
तद्वै देवा नेति । 'तत्' कार्यं 'देवा' 'न' प्राजानन् । तेषु 'अजानत्सु' कथमेते सह भागिनेति मद्वैरिभूतान् द्वेषकारिणः 'असुरान्' उपागम्य—॥ २ ॥

ते हैतामिति । तेषु 'याम्' ऋद्धिं देवाः श्रुत्वा व्यथन्ते, तादृशीम् 'एताम्' ऋद्धिमसुरेषु प्रवर्द्धयाञ्चक्रुः । तेषु प्रवर्द्धितेषु सत्सु असुराः केचन वसनात्पूर्वभाविनं तत्र दृष्ट्वैवाद्वत्यान् 'कृषन्तो' 'यन्ति,' किल, केचन कृष्टे क्षेत्रे बीजानि 'वपन्तो' यन्ति, उप्तबीजाश्च केचन सस्यानि सम्यक् फलितानीति परस्परमुक्त्वा एव तः परिणतानि सस्यानि 'लुनन्तो' यन्ति, केचन लूनानि व्रीहिफलानि 'मृणन्त' प्रहरन्त खले बलीवर्दाक्रमणादिना स्तम्बाद्धान्यं पृथक्कुर्वन्तः, तथा असुरदेशे सदा कर्षणापेक्षिता नीवारादयो मुहुर्मुहुः सर्वदा परिपक्वा आसन् ॥ ३ ॥

१-देवेषु अन्वायन्ते-इति पाठान्तरम् ।

तद्ध देवानामाग ऽआस । कनीय ऽइन्वुतो द्विषन्द्विषतेऽरातीयति किम्वेतावन्मात्रमुपजानीत यथेदमितोऽन्यथासदिति ॥ ४ ॥

ते होचुः । ( ऊँ ) ऋतूनेवानुमन्त्रयामहा ऽइति केनेति प्रथमानेवैनान्यजामेति ॥ ५ ॥

स हाग्निरुवाच । ( चा ) अथ यन्मां पुरा प्रथमं यजथ क्वाहं भवानीति न त्वामायतनाच्च्यावयाम ऽइति ते यदृतूनभिद्रवमाणा अथाग्निमायतनान्नाच्यावयंस्तस्मादग्निरच्युतो न ह वा ऽआयतनाच्च्यवते यस्मिन्नायतने भवति य ऽएवमेतमग्निमच्युतं वेद ॥ ६ ॥

ते देवा ऽअग्निमब्रुवन् । ( न्त ) परेह्येनांस्त्वमेवानुमन्त्रयस्वेति स हेत्या-

---

तद्ध देवानामाग आस । 'कनीय इन्वुतो द्विषन्, द्विषतेऽरातीयति, किमु एतावन्मात्रमुपजानीत—यथेदमितोऽन्यथाऽसदिति' ॥ ४ ॥

ते होचुः— ऋतूनेवानुमन्त्रयामहे—इति । केनेति । 'प्रथमानेवैनान्, यजे यजाम' इति ॥ ५ ॥

स हाग्निरुवाच— ' अथ यन्मां पुरा प्रथमं यजथ, क्वाहं भवानि ' इति । ' न त्वामायतनात् च्यावयाम ' इति । ते यदृतूनभिद्रवमाणा अथाग्निमायतनात्—नाच्यावयन्—तस्मादग्निरच्युतः । न ह वा आयतनाच्च्यवते—यस्मिन्नायतने, भवति—य एवमेतमग्निमच्युतं वेद ॥ ६ ॥

स देवा अग्निमब्रुवन्—' परेहि, एनांस्त्वमेवानुमन्त्रयस्व ' इति । स हेत्याग्निरुवाच—' ऋतवः !

---

तद्ध देवानामिति । एव वीरस्वमुरेषु समृद्धेषु सत्सु ' देवानां ' मनसि ' आगः ' अभवत् । कथमिति तद् यत ' अतः ' अस्मात्, इन्वु—इति भक्तिरुमाहेनो ' द्विषन् ' द्वेषकर्तेवासुरमतो ' द्विषते ' स्वमद्भ्याय 'अरातीयति' शत्रुभावमाचरतीति तिष्ठति । एतद् ' कनीय इन्वु ' निकृष्टं खलु । ' अतः ' महदेव नः कल्हो न तावत् । किन्तु 'इदम् ऋतवनिःमल्भ्य विहिनं कार्यम्' इतः ' अस्मात् इदानीं प्रहसप्रकारात् ' अन्यथा ' प्रकारान्तरेण ननाविनाश्मना असत् ' भवत् । ' एतावन्मात्रम् ' अवनुद्धयस्वेति परस्परमब्रुवन् ॥ ४ ॥

ते होचुरिति । उक्त्वा च, ' ऋतूनेव अनुमन्त्रयामहे '—इति निश्चित्य तदामुक्तो व ( ? ) ' केन ' इतरस्यैव ' प्रथमानेव एनान् यजतमर्दामिन्ह ॥ ५ ॥

अत्र प्रायस्य तस्योदकल्पने सत्याह—स हाग्निरिति । ' अग्निः ' पूर्वं ' माम् ' एव ' प्रथमम् ' इष्टवन्तः इदानीं तु प्रथमं यत्प्राप्नुयान्त ' अहं ' कुत्र स्थाने यज्ञे ' भवानीति ' अब्रवीत् । अथ ततोऽनन्तरं नाग्निं स्वस्थानात् 'न च्यावयाम इति' प्रतिश्रुत्य, ऋत्वाह्वानसमये ' अग्निं ' स्वस्थानात् प्रच्युतं न चक्रुः । ' तस्मात् ' ' अग्निः ' स्वस्थानात् अच्युतः ' अभूत् । ' एवं ' ' यः ' कोऽपि अग्निमच्युतमग्निमवचार जानाति, सोऽपि स्वस्थानात्र च्यवत इति तदर्थज्ञानफलम् ॥ ६ ॥

ते देवा इति । अत्र ' ते देवा ' अत्र स्थानस्य पात्नदाक्षिण्यात् ऋत्वनुमन्त्रणे अग्निमेव प्रत्युपासु ।

---

ग्निरुवाचाऽर्तर्ग्नोऽविदं वै वो देवेषु यज्ञे भागमिति कथं नोऽविद इति
प्रथमानेव वो यज्ञे यक्ष्यन्तीति ॥ ७ ॥

त ऋतवोऽग्निमब्रुवन् । (आ) आ वयं त्वामस्मासु भजामो यो नो
देवेषु यज्ञे भागमविद इति स एषोऽग्निर्ऋतुष्वाभक्तः समिधोऽग्ने तनू-
नपादग्न इडो अग्ने बर्हिरग्ने स्वाहाग्निमित्याभक्तो ह वै तस्यां पुण्यकृ-
त्यायां भवति ग्रामस्य समानो ब्रुवाणः करोत्यभिमते ह वा अस्मा अभि-
मन्त ऋतव ओषधीः पचन्तीदं सर्वं य एवमेतमग्निमृतुष्वाभक्तं वेद ८

तदाहुः । (यं) यदुत्तमान्प्रयाजानावाहयन्त्यथ कस्मादेनान्प्रथमान्यज-
न्तीत्युत्तमान्ह्येनान्यज्ञेऽवाकल्पयन्प्रथमान्वो यजामेत्यब्रुवंस्तस्मादुत्तमा-
नावाहयन्ति प्रथमान्यजन्ति ॥ ९ ॥

---

अविदं वै वो देवेषु यज्ञे भागमिति' । 'अथ नोऽविदः' इति. 'प्रथमानेव वो यज्ञे यक्ष्यन्ति' इति॥७॥

त ऋतवोऽग्निमब्रुवन्-' आ वयं त्वामस्मासु भजामो यो नो देवेषु यज्ञे भागमविद ' इति । स एषोऽग्निर्ऋतुष्वाभक्तः-" समिधोऽग्ने "-" तनूनपादग्ने "-" इडोऽग्ने" " बर्हिरग्ने " स्वाहाग्निम् " ( तै. ब्रा. ३. ५. ५ ) इति । आभक्तो ह वै तस्यां पुण्यकृत्यायां भवति, ग्रामस्य समानो ब्रुवाणः करोति, अभिमते ह वा अस्मा अभिमन्त ऋतव ओषधीः पचन्तीदं सर्वम्, य एवमेतमग्निमृतुष्वाभक्तं वेद ॥ ८ ॥

तदाहुः—' यद् उत्तमान् प्रयाजानावाहयन्ति-अथ कस्मादेनान् प्रथमान् यजन्ति ' इति ।

---

' स ' तथै वह्निरुप कल्पनाय ' उवाच ' भाह । ऋतव इति । ' व ' युष्माकं 'यज्ञे' 'देवेषु' मध्ये ' भाग ' मुक्तवानस्मि ' इति ' । केन प्रकारेणेति पृष्ट , 'प्रथमानेव ' तान् युष्मान् ' यक्ष्यन्ति '- -' इति उक्तवान् ॥ ७ ॥

त ऋतव इति । अथ सन्तुष्टा ' ऋतव ' हे अग्ने ! ' यज्ञे ' अस्माकं प्रथमम् ' अविदः ; ' अतः ' त्वाम् ' ' अस्मासु ' मध्ये ' आभजाम '—इति ' अब्रुवन् ' । तत एषोऽग्निः ' अग्निः ' ' ऋतुषु ' भाग लब्धवान् । 'समिधो अग्ने ' -'तनूनपादग्ने ' ' इड ' इत्यादावाभजनप्रकारोपदर्शनम् । उक्तार्थवेदनं प्रशंसति—आभक्तो ह वा इति । ' अस्य ' ग्रामस्य ' समानः ' इति सामान्ये ' ब्रुवाणः ' कीर्तिपुण्यो ' या पुण्यकृत्या ' व पुण्यकर्म दर्शपूर्णमासादिकं ' करोति ' तत्सम्बन्धि भागवान् भवति, तथा ' एवम् ' उक्तप्रकारेण ' अग्निमृतुष्वाभक्तं ' ' यो वेद ' ' अस्मै ' अग्निर्वै उक्तार्थज्ञानवता स्वेन दर्शपूर्णमासयोः तामग्निभागम् भजयेत । अतोऽस्मै तद्भक्तकारेण सहिता ' ऋतव ' ' ओषधीः ' व्रीहियवादिकाः सस्यकालोचिताः पाकं कुर्वन्ति । तथ पक्वा ओषधयः ! कियन्तः ? इति, तत्राह—इदं सर्वमिति । यद्यल्लोके परिदृश्यमानं तदिदं सर्वमोषधिजातमित्यर्थः ॥ ८ ॥

प्रयाजदेवतानां प्राथम्यं ब्रह्मवादिनो चोद्यमुखेन प्रशंसति—तदाहुरिति । आवाहनकालेऽपि सर्वत्र यागो दृष्टः; अत्र तथ वैपरीत्यमिति तेषामाशयः । तदिदं तत्कारणं दर्शयति—उत्तमान्हीति । ' हि ' यस्मात् प्रथमभाग-

---

१-समिधो इत्यादीनि प्रयाजमन्त्रपदानि । ते च मन्त्राः का. श्रौ. सू. उक्ताः । तथा तै. ब्रा. ३ । ३ । ५ तै. सं० २ । ६ । १ अत्रापि विहिताः सन्तीति ।

तथा ऽएवैष ऽएतत् । (ञ) चतुर्थेनैव प्रयाजेन यज्ञमाप्नोति तं पञ्चमेन सᳯँस्थापयत्यथ यदत ऽऊर्द्ध्वमसᳯँस्थितं यज्ञस्य स्वर्गमेव तेन लोकᳯँ समश्नुते ॥ १३ ॥

स यदाग्नेयमाज्यभागं यजति । (त्व) अग्निमेवैतत्पुरस्तात्कुरुते रक्षोहणᳯँ रक्षसामपहन्तारमथ यदाग्नेयः पुरोडाशो भवत्यग्निमेवैतन्मध्यतः कुरुते रक्षोहणᳯँ रक्षसामपहन्तारमथ यदग्निᳯँ स्विष्टकृतं यजत्यग्निमेवैतत्पश्चात्कुरुते रक्षोहणᳯँ रक्षसामपहन्तारम् ॥ १४ ॥

(ᳯँ) स यद्येनं पुरस्तात् । (द) असुररक्षसान्यासिसङ्क्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता यदि मध्यत ऽआसिसङ्क्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता यदि पश्चादासिसङ्क्षन्त्यग्निरेव तान्यपहन्ति रक्षोहा रक्षसामपहन्ता स ऽएवᳯँ सर्वतोऽग्निभिर्गुप्यमानः स्वर्गं लोकᳯँ समश्नुते ॥ १५ ॥

---

तथो एवैष एतच्चतुर्थेनैव प्रयाजेन यज्ञमाप्नोति, तं पञ्चमेन संस्थापयति, अथ यदत ऊर्ध्वमसंस्थितं यज्ञस्य—स्वर्गमेव तेन लोकं समश्नुते ॥ १३ ॥

स यदाग्नेयमाज्यभागं यजति—अग्निमेवैतत् पुरस्तात्कुरुते—रक्षोहणं रक्षसामपहन्तारम् । अथ यदाग्नेयः पुरोडाशो भवति—अग्निमेवैतन्मध्यतः कुरुते—रक्षोहणं रक्षसामपहन्तारम् । अथ यदग्निं स्विष्टकृतं यजति—अग्निमेवैतत् पश्चात्कुरुते—रक्षोहणं रक्षसामपहन्तारम् ॥ १४ ॥

स यद्येनं पुरस्तादसुररक्षसान्यासिसङ्क्षन्ति अग्निरेव तान्यपहन्ति—रक्षोहा रक्षसामपहन्ता । यदि मध्यत आसिसङ्क्षन्ति—अग्निरेव तान्यपहन्ति—रक्षोहा रक्षसामपहन्ता । यदि पश्चादासिसङ्क्षन्ति—अग्निरेव तान्यपहन्ति—रक्षोहा रक्षसामपहन्ता । स एवं सर्वतोऽग्निभिर्गुप्यमानः स्वर्गं लोकं समश्नुते १५

---

तथो एवैष इति । अत्र सर्वत्राग्निभिरादिमध्यान्तस्थितैः रक्षिता स्वर्गलोकं प्राप्ता यथा देवास्तथैवायं तान्तोऽपि यजमानः, चतुर्थेन प्रयाजेन यज्ञं स्वाधीनं कृत्वा पञ्चमेन समाप्य तदूर्ध्वभाविना असंस्थितेनावशिष्टेन यज्ञेन पुरस्तान्मध्ये पश्चाच्चाग्निनैव यज्ञविघातकान् घातयित्वा निर्बाधं स्वर्गमश्नुते ॥ १३ ॥

अग्नेः पुरस्तान्मध्ये पश्चाच्च स्थापनप्रकारं दर्शयति—स यदाग्नेयमित्यादिना । सौम्यस्याप्याज्यभागस्य सद्भावे 'आग्नेयम्'—इति विशेषितम् । प्रथममाज्यभागमग्नये कृतवान् यजमानः स्वर्गप्राप्तिसमये 'अग्निमेव' रक्षोहननाय 'पुरस्तात्' कृतवान् भवति । अनेन प्रथममाग्नेयाज्यभागं कुर्यादिति च लभ्यते । एवमाग्नेयेनाष्टाकपालेनाग्निं मध्यतः कुरुते आग्नेयेन स्विष्टकृता च पश्चात् ॥ १४ ॥

त्रिष्वपि स्थानेष्वग्निस्थापनस्य प्रयोजनमाह—स यद्येनं पुरस्तादित्यादिना । एतत्पूर्ववद् व्याख्येयम् ॥ १५ ॥

---

१–[illegible]

स यद्येनं पुरस्तात् । ( द्य ) यजुस्यानुव्याहरेत्तं प्रति ब्रूयान्मुख्यामार्तिमारिष्यस्यन्धो वा बधिरो वा भविष्यसीत्येता वै मुख्या ऽआर्तयस्तथा हैव स्यात् ॥ १६ ॥

यदि मध्यतो यजुस्यानुव्याहरेत् । ( तं ) तं प्रति ब्रूयादप्रजा ऽअपशुर्भविष्यसीति प्रजा वै पशवो मध्यं तथा हैव स्यात् ॥ १७ ॥

यद्यन्ततो यजुस्यानुव्याहरेत् । ( तं ) तं प्रति ब्रूयादप्रतिष्ठितो दरिद्रः क्षिप्रेऽमुं लोकमेष्यसीति तथा हैव स्यात्तस्मादु ह नानुव्याहारीव स्यादुत ह्येवंवित्परो भवति ॥ १८ ॥

---

स यद्येनं पुरस्ताद् यजुस्यानुव्याहरेत्–तं प्रति ब्रूयाद्–'मुख्यामार्तिमारिष्यसि–अन्धो वा बधिरो वा भविष्यसि ' इति । एता वै मुख्या आर्तयः । तथा [illegible] स्यात् ॥ १६ ॥

यदि मध्यतो यजुस्यानुव्याहरेत्–तं प्रति ब्रूयाद्–' अप्रजा अपशुर्भविष्यसि ' इति । प्रजा वै पशवो मध्यम्, तथा हैव स्यात् ॥ १७ ॥

यद्यन्ततो यजुस्यानुव्याहरेत् तं प्रति ब्रूयाद् 'अप्रतिष्ठितो दरिद्रः क्षिप्रेऽमुं लोकमेष्यसि' इति । तथा हैव स्यात् । तस्मादु ह नानुव्याहारीव स्यात् । उत ह्येवंवित्परो भवति ॥ १८ ॥

---

" स एव सर्वतोऽग्निभिर्गुप्यमान "–इति यदग्निरक्षणमुक्तम्, तत्प्रशंसनाय कश्चिद् दृष्ट प्रतीतमाह–स यद्येनमिति । ' स ' अनुव्याहारी निन्दक ' एनम् ' अग्निना रक्षितं यजमानं ' यजुष्य ' ' पुरस्तात् ' पूर्वभाग ' अनुव्याहरत् ' मैत्र्यविरुद्ध वाक्यं ब्रूयात्, ' [illegible] ' निन्दकं ' प्रति ' [illegible] यजमानोऽपि ' ब्रूयात् '–' मुख्यामार्तिमारिष्यसि, अन्धो वा बधिरो वा भविष्यसीति ' । एषैव मुख्याऽऽर्तिरित्याह–' एता ' अन्धबधिरादय ज्वरादिरोगेभ्यः प्राक्तनाभ्यामार्तिभ्यो मुख्यत्वम् ॥ १६ ॥

यदि मध्यत इत्यादि । स्पष्टम् ॥ १७ ॥

यद्यन्तत इति ' क्षिप्रे ' अचिरभविष्यत्काले भूमौ प्रतिष्ठारहितो ' दरिद्र ' सन् ' अमुं लोकम् ' स्वर्गम् ' एष्यसि ' ' इति ' । अत्र स्वर्गस्य नाशाभावत्वात् ' अमुं लोकम् ' इत्येतदस्माल्लोकात्प्रच्युतिमात्रे पर्यवस्यति । किमेवमभिधानमात्रेण तथाविधाऽमुलप्राप्ति सिद्धा स्यादित्याशङ्क्योक्तम्–तथा हैव स्यादिति । उक्तप्रकार स्यादेवेत्यर्थ । यस्मादेवमवद्वर फलम्, ' तस्माद् ' ' अनुव्याहारीव न स्यात् ' यजुस्य निन्दको न भवेदिति विधि । उक्तार्थज्ञ प्रशंसति–न केवल यष्टैव, अपि तु ' एवंविद् ' अपि स्वद्वेषकात् स्वयं ' पर ' उत्कर्षो ' भवति ' । अथवा–एव वेदनाया सामर्थ्यात् भवेदिति व्याख्येयम् । तस्मादात्मभागार्दीनामाग्नेयत्ववरण प्रशस्तमिति तात्पर्यार्थ ॥ १८ ॥

---

१–यत्र तु मुख । नेदं मुखशब्द यथार्थ । किन्तु मुखे मुखप्रदेशे महा पीडा मुख्या । यद्वत्य मुखेऽनुव्याहरणादनुव्याहर्तुः रति मुखभागस्यैव क्षिकर्षा दृष्टव यात्र आवर्ते–इति तात्पर्यम् ॥

संव्वत्सरꣳ ह वै प्रयाजैर्ज्जयञ्जयति । स हु न्वेवैनं जयति योऽस्य द्वाराणि व्वेद किꣳहि स तैर्गृहैः कुर्याद्यानन्तरतो नु व्यवव्विद्याद्यथायथास्य ते भवन्ति तस्य व्वसन्त एव द्वारꣳ हेमन्तो द्वारं तं वा एतꣳ संव्वत्सरꣳ स्वर्ग्गं लोकं प्रपद्यते सर्व्वं वै संव्वत्सरः सर्व्वं वा ऽअक्षय्यमेतेनो हास्याक्षय्यꣳ सुकृतं भवत्यक्षय्यो लोकः ॥ १९ ॥

( स्तु ) तदाहुः । किन्देवत्यान्याज्यानीति प्राजापत्यानीति ह ब्रूयादनिरुक्तो वै प्रजापतिरनिरुक्तान्याज्यानि तानि हैतानि यजमानदेवत्यान्येव यजमानो ह्येव स्वे यज्ञे प्रजापतिरेतेन ह्युक्ता ऽऋत्विजस्तन्वते तं जनयन्ति ॥ २० ॥

सऽआज्यस्योपस्तीर्य । द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति

---

संवत्सरं ह वै प्रयाजैर्जयन् जयति । स ह न्वेवैनं जयति—योऽस्य द्वाराणि वेद । किं हि स तैर्गृहैः कुर्याद्—यानन्तरतो न व्यवविद्याद्—यथा यथास्य ते भवन्ति । तस्य वसन्त एव द्वारम्, हेमन्तो द्वारम् । तं वा एतं संवत्सरं स्वर्गं लोकं प्रपद्यते । सर्वं वै संवत्सरः, सर्वं वा अक्षय्यम् । एतेनो हास्याक्षय्यं सुकृतं भवति, अक्षय्यो लोकः ॥ १९ ॥

तदाहुः—'किंदेवत्यान्याज्यानि' इति । 'प्राजापत्यानि'—इति ह ब्रूयात् । अनिरुक्तो वै प्रजापतिः, अनिरुक्तान्याज्यानि । तानि हैतानि यजमानदेवत्यान्येव, यजमानो ह्येव स्वे यज्ञे प्रजापतिः—एतेन ह्युक्ता ऋत्विजस्तन्वते—तं जनयन्ति ॥ २० ॥

स आज्यस्योपस्तीर्य, द्विर्हविषोऽवदाय, अथोपरिष्टादाज्यस्याभिघारयति । सैषाऽज्येन मिश्राहुति-

---

प्रयाज एव किञ्चिद्वेदितव्यमित्याह—संवत्सरं हेति । 'प्रयाजैः' साधनैः साध्य 'जयन्' संवत्सरं खलु 'जयति' जितवान् पूर्वाध्याये "देवाश्च वा असुराश्च" इत्यत्र "ऋतून् संवत्सरं प्राजयन्" इत्यादिनोक्त ( श. १ का. ५ अ. ३ ब्रा. ३ क. इत्यत्र ) । 'यः' 'अस्य' संवत्सरस्य 'द्वाराणि' जानाति—'सः' खल्वेव 'एनं' संवत्सरं 'जयति' नान्यथेत् । 'यान्' प्रयाजान् 'अन्तरतः' मध्यतो 'हि' 'न' व्यवजानाति—'ते' च 'यथा' येन प्रकारेण 'अस्य' उपकारका 'भवन्ति'—'स' अनुष्ठाता 'तैः' गृहमार्गैरवरुद्धैः प्रयाजैः 'किं कुर्यात्' किं साधयेत् । 'संवत्सरः' यदेकैकस्तत् क्षयिष्णु, यत् 'सर्वं' तदपरिच्छेदात् सावदक्षय्यम् । एतस्याविज्ञानेन च 'सुकृतं' सत्फलभूतं पुण्यलोकश्च—उभावप्यक्षय्यौ भवतः ॥ १९ ॥

अथाज्यद्रव्यं प्राजापत्यत्वेन प्रशंसितुमाह—तदाहुरिति । प्रजापतेः सकलदेवतात्मकत्वात्...मस्ताविति निरुक्तमशक्यत्वादनिरुक्तत्वम् । अत 'आज्यानि प्राजापत्यानीति ब्रूयात्' । आहुरित्यनेन...वचनम् । प्रजापतिशब्देनात्र विवक्षितमर्थमाह—तानि हेति । 'तानि एतानि' प्रयाजादियागसाधनद्रव्याण्याज्यानि 'यजमानदेवत्यानि' । एतत्कारणं प्रतिपाद्य प्रजापतित्वोपपत्ते । एतदुपपादयति—यजमानो हीति । एतदेवाऽत्रऽन्यथेतिव्यासङ्गमाह—एतेनेति । ऋत्विजः दक्षिणादिदानेन पालनात् प्रजापतित्वम् । 'ऋत्विजः' 'तु' 'एतेन' नियुक्ता एव यज्ञं 'तन्वते' स्व—स्वभागं विस्तारयन्ति । तदेवाह—तं जनयन्तीति । 'तं' यज्ञम् ॥ २० ॥

इदमाज्यं यजमानदेवताकत्वेन प्रशस्तम्, अतस्तेनोपस्तरणाभिघारणादि कर्तव्यमित्याह—स आज्यस्येति ।

# अथ पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ।

## अपि वा–

## षष्ठाध्याये द्वितीयं ब्राह्मणम् ।



यज्ञेन वै देवाः । ( ऽ ) इमां जितिं जिग्युर्येषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यᳬं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम तद्वा ऋषीणामनुश्रुतमास ॥ १ ॥

यज्ञेन ह वै देवाः । ( ऽ ) इमां जितिं जिग्युर्येषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यᳬं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्निति तमन्वेषं दधिरे ॥ २ ॥

---

( आवाप–प्रदेशः । )

यज्ञेन वै देवा इमां जितिं जिग्युः—येषामियं जितिः । ते होचुः— 'कथं न इदं मनुष्यैरनभ्यारोह्यं स्यात्' इति । ते यज्ञस्य रसं धीत्वा—यथा मधु मधुकृतो निर्धयेयुः—विदुह्य यज्ञं, यूपेन योपयित्वा तिरोऽभवन् । अथ यदेनेनायोपयन्—तस्माद् यूपो नाम । तद्वा ऋषीणामनुश्रुतमास ॥ १ ॥

'यज्ञेन ह वै देवा इमां जितिं जिग्युः—येषामियं जितिः । ते होचुः—'कथं न इदं मनुष्यैरनभ्यारोह्यं स्यात्' —इति । ते यज्ञस्य रसं धीत्वा—यथा मधु मधुकृतो निर्धयेयुः—विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्, इति । तमन्वेषं दधिरे ॥ २ ॥

तेऽर्चन्तः श्राम्यन्तश्चेरुः । श्रमेण ह स्म वै तद्देवा जयन्ति यदेषां जय्यमासुरृषयश्च तेभ्यो देवा नैव प्ररोचयाञ्चक्रुः स्वयं नैव दधिरे प्रेत तदेष्यामो यतो देवाः स्वर्गं लोकꣳ समाश्नुवतेति ते किं प्ररोचते किं प्ररोचत इति चेरुरेतत्पुरोडाशमेव कूर्म्मं भूत्वा सर्प्पन्तं ते ह सर्व्व एव मेनिरेऽयं वै यज्ञ इति ॥ ३ ॥

ते होचुः । ( २ ) अश्विभ्यां तिष्ठ सरस्वत्यै तिष्ठेन्द्राय तिष्ठेति स सर्प्पन्नेवाग्नये तिष्ठेति ततस्तस्थावग्नये वा अस्थादिति तमग्नावेव परिगृह्य सर्व्वहुतमजुहवुराहुतिर्हि देवानां तत एभ्यो यज्ञः प्रारोचत तमसृजन्त तमतन्वत सोऽयं परोऽवरं यज्ञोऽनूच्यते पितेव पुत्राय ब्रह्मचारिणे ॥ ४ ॥

---

तेऽर्चन्तः श्राम्यन्तश्चेरुः । श्रमेण ह स्म वै तद्देवा जयन्ति–यदेषां जय्यमास–ऋषयश्च । तेभ्यो देवा नैव प्ररोचयाञ्चक्रुः, स्वयं नैव दधिरे, प्रेत तदेष्यामः–यतो देवाः स्वर्गं लोकं समाश्नुवतेति । ते–' किं प्ररोचते किं प्ररोचते ' इति चेरुः । एतत् पुरोडाशमेव कूर्मं भूत्वा सर्पन्तम् । ते ह सर्व एव मेनिरे–' अयं वै यज्ञः ' इति ॥ ३ ॥

ते होचुः ' अश्विभ्यां तिष्ठ, सरस्वत्यै तिष्ठ, इन्द्राय तिष्ठ ' इति, स सर्पन्नेव । ' अग्नये तिष्ठ ' इति–ततस्तस्थौ । अग्नये वा अस्थाद्–इति तमग्नावेव परिगृह्य सर्वहुतमजुहवुः । आहुतिर्हि देवानाम् । तत एभ्यो यज्ञः प्रारोचत, तमसृजन्त, तमतन्वत, सोऽयं परोऽवरं यज्ञोऽनूच्यते–पितेव पुत्राय ब्रह्मचारिणे ॥ ४ ॥

---

तेऽर्चन्त इति । तदन्वेषणेन ' अर्चन्तः ' अन्वेषणं कुर्वन्तः, अन्वेषणप्रयासेनात्मानं खेदयन्तः इतस्ततः सञ्चेरुः । एतत्क्रियाशङ्कयाह–श्रमेणेति । देवा ऋषयश्च पूर्वं जेतुं शक्यमर्थं श्रमेणैव 'जयन्ति' अतः श्राम्यन्तश्चेरुरित्येतद् युक्तमित्यर्थः । अथ तदन्वेषणं एतेषां देवा अपि रुच्युत्पादनमकुर्वन् । तेऽपि स्वयमपि तदर्थं मतिं कृत्वा परस्परं यूयं प्रगच्छत यस्मात् स्वर्गं लोकं देवा प्राप्ताः, ' तत् ' स्थानम् ' एष्याम ' इति ' उक्त्वा इतस्ततश्चरन्तः ' किं प्ररोचते किं प्ररोचते ' किं तत्र रुच्यम्, किं तत्र मतम् ' इति ' ब्रुवाणाः ' चेरुः ' । परिभ्रम्य च ' पुरोडाशमेव ' कूर्मरूपं भूत्वा ' सर्पन्तम् ' ( पुरोडाशम् ) ' आ इत् ' आ–इयुरागच्छन्नित्यर्थः क्रियाध्याहारः तमाजग्मुरित्यर्थः । ' ते सर्वे ' अपि ' अयं ' कूर्मः एवास्माभिरन्वेष्टव्यो ' यज्ञ इति ' निश्चिक्युः ॥ ३ ॥

ते होचुरिति । ' ते ' " हे यज्ञात्मक–पुरोडाश ! ' त्वम् ' ' अश्विभ्याम् ' अर्थाय ' तिष्ठ ' स्थिरो भव–मा पलायिष्ट " इति ' ऊचुः ' । तथापि ( तथैव ) ' सरस्वत्यै ' तिष्ठ इति ' इन्द्राय तिष्ठ '–इति चाब्रुवन् । तस्मिन् सर्पति सति ' अग्नये तिष्ठेति ' ऊचुः । ' ततः ' स स्थितवान् । अथ ते " अयं पुरोडाशोऽग्नये

---

१–' लभ्यजय्यौ शक्यार्थे ' ( पा सू ६ । १ । ८१ ) इति जय्यशब्दस्य शक्यार्थ एव साधुत्वं बोध्यम् । २–अनुगमनरूपाकृति कूर्मस्य प्रतिकृतिमात्रकत्वात् करोति यजमानो वा मन्त्रः ' इति पुरोडाशविषये आपस्तम्बः । आप० श्रौ० सू० १ । २५ । ८ । ५ ॥ ३–( ) चिह्नान्तर्गतः पाठः प्रक्षिप्तः ।

स वा एभ्यस्तत्पुरोऽदाशयत् । ( यु ) यु एभ्यो यज्ञं प्रारोचयत्तस्मात्पुरोदाशः पुरोदाशो ह वै नामैतद्यत्पुरोडाश इति स एष उभयत्राच्युत आग्नेयोऽष्टाकपालः पुरोडाशो भवति ॥ ५ ॥

स नु पौर्णमासᳪं हविः । ( नो ) नामावास्यमग्नीषोमीय एव पौर्णमासᳪं हविः सान्नाय्यमामावास्यं यद्व एवैष उभयत्रावक्लृप्तो नेद्यज्ञाद्रयानीति न्वेव पुरस्तात्पौर्णमासस्य क्रियत एवमामावास्यस्यैतन्नु तद्यस्मादत्र क्रियते ॥ ६ ॥

---

स वा एभ्यस्तत् पुरोऽदाशयत्—य एभ्यो यज्ञं प्रारोचयत्, तस्मात्पुरोदाशः, पुरोदाशो ह वै नामैतद्—यत् पुरोडाश इति । स एष उभयत्राच्युत आग्नेयोऽष्टाकपालः पुरोडाशो भवति ॥ ५ ॥

स न पौर्णमासं हविः, नामावास्यम् । अग्नीषोमीय एव पौर्णमासं हविः, सान्नाय्यमामावास्यम् । यद्व एवैष उभयत्रावक्लृप्तः, 'नेद्यज्ञाद्रयानि' इति न्वेव पुरस्तात् पौर्णमासस्य क्रियते, एवमामावास्यस्य । एतन्नु तद्—यस्मादत्र क्रियते ॥ ६ ॥

---

स्यत.' इति 'तम्' अन्यार्थत्वेन 'परिगृह्य' यथा दैवतान्तरसम्बन्धराहित्येन सः 'अमवे' एव 'आस्थात्', तथा 'सर्वहुतमजुहवुः' । किमेकस्मै सर्वस्यापि प्रदानमिति तत्राह—आहुतिर्हि देवानामिति । प्रियेति शेषः । यतः प्रियस्य वस्तुनोऽसाकल्येन प्रदानमनुचितम्, अतः सर्वहोमो युक्त इत्यर्थः । 'ततः' अस्मात् कारणात् 'एभ्यः' ऋषिभ्यो मनुष्येभ्यः 'प्रारोचत' रुचिमुत्पादयत् । 'तम्' 'अमृजन्त' इत्युपादयन्, 'तम्' एव 'अतन्वत' अङ्गकलापैर्विस्तारितवन्तः । 'सोऽयं' यज्ञः 'परोऽवरम् अनूच्यते' यथा परभावी सन् कस्यचिदुपादिष्टः सम्मुखादन्यस्योपदेशनात् प्रथमेव 'अवरः' पश्चाद्भावी भवति, तथाऽनुक्रमेणोत्पत्त इत्यर्थः । तदेवाह—पितेव पुत्रायेति । 'अब्रह्मचारिणे' उपनीतायैव वेदविद्याधिकारात् ब्रह्मचारिण इत्युक्तम् ॥ ४ ॥

अथ पुरोडाशं नामनिर्वचनद्वारेण स्तौति—स वा इति । यतः 'सः' कूर्मरूपेणाग्निः मनुष्यैर्दृष्टः, 'तत्' तदा यागसमये 'पुरः' पूर्वस्मिन् काले यज्ञमुखे 'अदाशयत्' अत्यन्तदारयत् । तथा 'यः' पुरोडाशः 'एभ्यः' मनुष्येभ्योऽयं 'यज्ञं प्रारोचयत्', तस्मात् पुरोऽदाशयत्, 'तस्मात्' सः 'पुरोदाशः' वस्तुतः एतन्नाम । 'यत्' सर्वैरिदानीन्तनैः 'पुरोडाश इति' व्यवह्रियते ॥

इत्यमर्थवादेन प्रशस्येदानीं तं विधत्ते—स एष इति । 'सः' देवैराच्छादितः 'एषः' मनुष्यैर्लब्धः 'पुरोडाशः' 'आग्नेयः' अग्निदेवताकः । 'सः' 'उभयत्र' दर्शे पौर्णमास्यां च 'अच्युतः' नित्यं कर्तव्यः, 'भवति' ॥ ५ ॥

इत्यमाचारत्वमेव स्थापयति—स नेति । पौर्णमास्यां भवं 'पौर्णमासम्' एवं 'आमावास्यम्' उभयात्मकमाग्नेयत्वाभावात् ते हि प्रतिनियतैकहविषी इति—तं आह—अग्नीषोमीय एवेत्यादिना । उभयत्रापि नियमेनाग्नेयनामभिप्रायमाह—यद्व एवैष इति । यज्ञमावनत्वात्, 'एषः' पुरोडाशः 'यज्ञ ... ' । स उभयकालेऽपि नियमेन दृष्टैः 'अयानि'—'इति' उभयत्रावक्लृप्तमतिक्रम्य नैव गच्छाति, यदा अन्यदपु-

---

१-तत्रेति क्वचित् । २-श्र. सू. ३ । २ । ३ । ॥ ८ । २ । ६० ॥ वा. स० ३६ ॥ २०३८ ॥ अ. बा. भा. २ । ४३ ॥
३-"सप्तस्य देवता" "अनोऽर्ह्" इति पा० सू० ४ । २ । २४ । २२ ॥

युद्यु ऽएनमुपधावेत् । ( ड्रि ) इष्ट्या मा याजयेत्यंतुयैवु याजयेद्युत्कामा वा ऽएतमुपयोऽजुहवुः सु ऽएभ्यः कामः सुमर्द्ध्यत युत्कामो ह वा ऽएतेन यज्ञेन युजते सोऽस्मै कामः समृद्ध्यते युस्यै वै कुस्यै च देवतायै हुविर्गृह्यतेऽग्नौ वै तुस्यै जुह्वत्यग्ना ऽउ चेद्धोप्यन्त्स्यात्किमन्युस्यै देवताया आदिशेत्तुस्मादग्नय ऽएव ॥ ७ ॥

( वा ) अग्निर्वै सुर्वा देवताः । ( ऽ ) अग्नौ हि सुर्वाभ्यो देवताभ्यो जुह्वति तद्युथा सुर्वा देवता ऽउपधावेदेवं तत्तुस्मादग्नय ऽएव ॥ ८ ॥

---

यद्यु एनमुपधावेत् इष्ट्या मा याजय' इति–एतयैव याजयेत् । यत्कामा वा एतमुपयोऽजुहवुः–स एभ्यः कामः समर्द्ध्यत । यत्कामो ह वा एतेन यज्ञेन यजते–सोऽस्मै कामः समृद्ध्यते । यस्यै वै कस्यै च देवतायै हविर्गृह्यते–अग्नौ वै तस्यै जुहति । अग्ना उ चेद्धोष्यन् स्यात्–किमन्यस्यै देवताया आदिशेत् । तस्मादग्नय एव ॥ ७ ॥

अग्निर्वै सर्वा देवताः–अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति । तद्यथा सर्वा देवता उपधावेद्–एवं तत् । तस्मादग्नय एव ॥ ८ ॥

---

निपाति, तदा ' तेन् ' परिभव भवति । " नेयेश इति येतेन सम्प्रयुज्यते परिभये" ( निरु० १–३–६ ) इति हि निर्वचनेन तत्त्वभिप्रायेण ' पौर्णमासस्य ' ' आमावास्यस्य ' च यागस्य ' पुरस्तात् ' पूर्वकाले ' निर्वपेत् ' । ' यस्मात् ' दर्शे पौर्णमास्यां च यस्मात्कारणाद्दुष्टिकेते, ' तत् ' तत्कारणम् ' एनन्नु ' उभय निमित्त तत्तु ॥ ६ ॥

अस्यैवाग्नेयस्य काम्यफलाय पृथक्–प्रयोगस्थानमाह–यद्यु इति । ' एनम् ' आध्वर्युम् । ' एतयैव ' । आग्नेयेष्ट्यैव । यत्कामा [illegible] इति । पुरा ' एनम् ' आग्नेयाष्टाकपालपुरोडाशम् ' कामय ' य कामम् ' अजुहवु ' अन्वतिष्ठन्, ' एभ्य ' ' स काम ' समृद्धोऽभूत् । अत इदानीमपि य ' एतेन यजते ' ' अस्मै ' अपि ' स काम ' भवत्येव ।

यस्मान्यदग्नावपालेष्टिरेव विशसामर्थ्योऽभूत्–तमग्नि बहुधा प्रशंसति–यस्यै वै कस्यै चेत्यादिना । या काश्चिद्देवतामुद्दिश्याज्यसोमादि ' हवि ' ' गृह्यते ' तत् ' अग्नौ ' एव ' जुहति ' नान्यत्र, अत: सर्वे वा सर्वस्य ' अग्नाऽउ ' अग्नावेव ' होष्यन् ' यदि भवेत्, तर्हि किमर्थम् ' अन्यस्यै ' इन्द्रादिदेवतायै–अमुष्मा इदमिति ' आदिशन् ' ' तस्मात् ' अग्नौ होमस्यावश्यकत्वात् ' अग्नय एव ' होम प्रशस्त इति शेष ॥ ७ ॥

इतोऽप्यग्नय एव प्रदान युक्तमित्याह–अग्निर्वा इति । उक्तप्रकारेण अग्नावेव सर्वदेवतार्थहवनात्तद्रूपत्वात् ' सर्वा ' अग्नि ' एव । ' तत् ' तस्मात् सर्वदेवतोपासनात् यद्भवति, तदग्नेरुपासनेनैव स्यात् । ' तस्मादग्नय एव ' हविरादिश्य प्रशस्त ॥ ८ ॥

---

१ समाहृयति इति पाठो युक्त इति भाति ॥ २–" यदि एव " न अजहत्" ऽपि नयो दूरे न क्रियते " इति ह चर्नाद ॥ ३–" अस्मा आग्नये– ' इति हस्तलिपाठ ।

(वा) अ॒ग्निर्वै दे॒वाना॑मद्धा॒तमा॑म् । यं व्वा॒ ऽअद्धा॒तमां॑ मु॒न्येत॒ तमु॑प-
धावे॒त्तस्मा॑दग्नय॒ ए॒व ॥ ९ ॥
(वा) अ॒ग्निर्वै दे॒वानां॑ मृ॒दु॒हृद॑यतमः । (मा) यं वै मृ॑दु॒हृद॑यतमं मु॒न्येत
तमु॑पधाव॒त्तस्मा॑दग्नय॒ ऽए॒व ॥ १० ॥
(वा) अ॒ग्निर्वै दे॒वानां॒ नेदि॑ष्ठम् । यं वै नेदि॑ष्ठमुपस॒र्त्तव्या॑नां मु॒न्येत॒ तमु॑प-
धावे॒त्तस्मा॑दग्नय॒ ऽए॒व ॥ ११ ॥
स यदी॒ष्टिं कु॒र्वी॒त । सप्तदश सा॒मिधे॒नीरनु॑ब्रूयादुपा॒ꣳशु दे॒वतां॒ यजति
त॒दीष्टि॑रूपं मू॒र्द्धन्वत्यौ॑ याज्यानुवा॒क्ये॑ स्या॒तां व्वार्त्र॑घ्ना॒वाज्य॑भा॒गौ वि॒राजौ॑
संया॒ज्ये॑ ॥ १२ ॥ १ ॥

इति पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ॥ (६।२)

---

अग्निर्वै देवानामद्धातमाम् । यं वा अद्धातमां मन्येत–तमुपधावेत । तस्मादग्नय एव ॥ ९ ॥
अग्निर्वै देवानां मृदुहृदयतमः । यं वै मृदुहृदयतमं मन्येत–तमुपधावेत् । तस्मादग्नय एव ॥ १० ॥
अग्निर्वै देवानां नेदिष्ठम् । यं वै नेदिष्ठमुपसर्त्तव्याना मन्येत–तमुपधावेत् । तस्मादग्नय एव ॥ ११ ॥
स यदीष्टिं कुर्वीत–सप्तदश सामिधेनीरनुब्रूयात् । उपांशु देवतां यजति–तदीष्टिरूपम् । मूर्द्धन्वत्यौ याज्यानुवाक्ये स्याताम्, वार्त्रघ्नावाज्यभागौ, विराजौ संयाज्ये ॥ १२ ॥

---

अग्निर्वै देवानामिति । कि यथा लोके यम् ' अद्धातमाम् ' अतिशयेन प्रत्यक्षफलदं मन्येत, ' तम् ' एव ' उपधावेत् ', एवमग्नेः प्रत्यक्षदेवत्वात् ' अग्नय एव ' ॥ ९ ॥
तथा–इतरदेवताभ्योऽग्नेरेव हविः प्रदानाय मृदुहृदयत्वात् प्रत्यक्षदेवत्वेन समीप एव सेव्यत्वाच्च एवं होमो युक्त इत्याह–अग्निर्वै देवानां मृदुहृदयतम इति । अग्निर्वै देवानां नेदिष्ठमिति च ॥ १० ॥ ११ ॥
अथ पृथक्प्रयोगव्याख्या आग्नेयेष्टेर्वैशेषिकमङ्गजातमाह–स यदीष्टिमिति । ' यदि ' ' इष्टिं ' दर्शपूर्णमासात् पृथगेव ' कुर्वीत, ' ' सः ' ' सामिधेनीः ' ' सप्तदश ' ' अनुब्रूयात् ', तथा प्रधानदेवता उपांशु यजेत । ' तद् ' उपांशुत्व काम्येष्टिरूपं खलु उपांशु काम्या इष्टय क्रियन्ते इति । तत्र ' मूर्द्धन्वत्यौ ' " अग्निर्मूर्द्धा,-भुवो यज्ञस्य ( य. स. १३–१४, १९ ) " इत्येते मूर्द्धशब्दवत्यौ प्रधानस्य याज्ये स्विष्टकृतश्चानुवाक्ये, ' विराजौ ' विराट्छन्दस्के " प्रेद्धो अग्ने, इमो अग्ने ( य. स. १७, ७६ ) " इत्येते भवतः ॥१२॥१॥[६ २]
इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
प्रथमकाण्डे षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥

---

१–अद्धा इत्यव्यय सत्यनामसु निघण्टौ पठितम् । निरु. ३।१०।४। इष्ठोत्सर्गात् बहुल ५.३।१।२५॥३।१। ८।११॥ इति ॥
२–अत्र सामिधेन्याः सप्तदशत्वाख्यान मतान्तराभिप्रायेणोक्तम्, वस्तुतस्तु पञ्चदशैव सामिधेनीरनुब्रूयादिति सिद्धान्तः । " सो एषा सामिधेनी न स्वेवैता अनूच्यन्ते " ( श प १ । ३ । ५ । १२ ) इति कण्ठयोगेन सप्तदशसंख्याया एकविंशतिसंख्यायाश्च सामेव प्रत्याख्यातत्वात् । ३–पुरस्तात् ( ३।५।३० ) इत्यत्र द्रष्टव्यम् । ४–" मतुपो मुम्भलन्तम् " इति पा. सू ४।४।१२७। ५–सैयाज्यशब्दार्थस्तैत्तिरीयब्राह्मणभाष्ये ( १.१ ५ ) "स्विष्टकृत्सम्बन्धिन्यौ याज्यानुवाक्ये इत्यर्थः" इत्येव सायणेन निरूपितम् ।

त्वष्टुर्ह वै पुत्रः । (त्रि) त्रिशीर्षा षडक्ष ऽआस तस्य त्रीण्येव मुखान्यासुस्त-द्यदेवꣳ रूप ऽआस तस्माद्विश्वरूपो नाम ॥ १ ॥

तस्य सोमपानमेवैकं मुखमास । सुरापाणमेकमन्यस्मा ऽअशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद ॥ २ ॥

स यत्सोमपानमास । ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुक ऽइव बभ्रु-रिव हि सोमो राजा ॥ ३ ॥

( ऽथ ) अथ यत्सुरापाणमास । ततः कलविङ्कः समभवत्तस्मात्सोऽभि-माद्यत्क ऽइव वदत्यभिमाद्यन्निव हि सुरां पीत्वा वदति ॥ ४ ॥

---

त्वष्टुर्ह वै पुत्रस्त्रिशीर्षा षडक्ष आस । तस्य त्रीण्येव मुखान्यासुः । तद्यदेवंरूप आस—तस्माद् विश्वरूपो नाम ॥ १ ॥

तस्य सोमपानमेवैकं मुखमास, सुरापाणमेकम्, अन्यस्मा अशनायैकम् । तमिन्द्रो दिद्वेष—तस्य तानि शीर्षाणि प्रचिच्छेद ॥ २ ॥

स यत् सोमपानमास—ततः कपिञ्जलः समभवत् । तस्मात् स बभ्रुक इव । बभ्रुरिव हि सोमो राजा ॥ ३ ॥

अथ यत् सुरापाणमास—ततः कलविङ्कः समभवत् । तस्मात् सोऽभिमाद्यत्क इव वदति—अभि-माद्यन्निव हि सुरां पीत्वा वदति ॥ ४ ॥

---

अग्नीषोमीयपशोरुपाकरणकाल विधातुमाख्यायिकामाह—त्वष्टुर्ह वै पुत्र इति । पुरा किल 'त्वष्टुः' शिरस्त्रयेण युक्त कश्चित् 'पुत्र' अभूव । यतोऽयमुक्तरीत्या बहुरूप, अत स 'विश्वरूप' इत्यन्वर्थनामा अभूत् ॥ १ ॥

तस्येति । तस्य 'शिरस्त्रयगतेषु मुखत्रयेषु मध्ये 'एकं मुखं' 'सोमपान' सोम पीयतेऽनेनेति करणे ल्युट्, ( पा सू. ३ । ३ । ११७ ) सोमपानायाभूत् । अन्यन्मुखं 'सुरापाण' सुरापानसाधनम् । 'वा भाव-करणयो' ( पा सू. ८-४-१० ) इति णत्वम् । 'अन्यस्मै' पानव्यतिरिक्ताय 'अशनाय' भोजनाय 'एकं मुखमासीत्' । 'स' विश्वरूप दृष्ट्वा 'इन्द्र' 'दिद्वेष' द्वेषमकरोत् । द्वेषकारणं तैत्तिरीयके समाम्नातम् "स प्रत्यक्षं देवेभ्यो भागमवदत् । परोक्षमसुरेभ्य " ( तै स २ ५. १. १. ) इति । स क्रुद्ध इन्द्र —'तानि' त्रीण्यपि शिरांसि प्रचिच्छेद ॥ २ ॥

स यत्सोमपान इति । तेषु त्रिषु मुखेषु मध्ये 'यत्' सोमपानाय मुख 'ततः' 'कपिञ्जल' पक्षी 'समभवत्' " कपिञ्जल कपिरिव जीर्णः, कपिरिव जवते, ईषत्पिङ्गलो वा" " ( नि. ३, ४, १ ) इति यास्क । एतदर्थविश्वासाय पक्षिणः सोमस्य च साम्यमाह—तस्मात् स बभ्रुक इवेति ॥ ३ ॥

अथ यत् सुरापाणमिति । तथा कलविङ्कोऽपि शब्दयति, अत —ततस्तत्तुल्यनिर्युक्त ॥ ४ ॥

---

१–एतदग्न्याख्यानकण्डिकाया 'न सुरीत' इत्यत्र अन्यथात पुन पञ्चमे काण्डेऽपि श्रुत ५ । ५ । ४ । २ । ८ ॥ २–अस्य निर्वचनम् 'रसा तृणमस्तु इति नैरुक्ता, विवर्णो स्याद् दामिकर्मण, स्वशतेर्वा स्याद् कर्मेतिकर्मण ' इति यास्केना-भिहितम्–( नि ८ २–१० ) अन्यदप्यत्र द्रष्टव्यम् तत्तत्रत्य निरुक्त । ३–त्रिशिरोवर्णनं कृत सायणाचार्येण ऋ. सं. १ म २ अ १ सूक्तस्य । विश्वरूपस्तु त्रिशीर्षा ' ०–०शिरोमा ' इत्यादौ द्रष्टव्यम् । ऋ स १० । ८ । ८ । ९९ । ९ ॥ ४–' अथ उपरमान्यथापरमनंतस्यावचन ' इत्यादि ग्रन्थ्यम् । तत्र " कमनाय शब्द विजानीते वा" इति च तत्रोक्त ॥

( त्यु ) अुथ युदन्युस्मा ऽअुशनायास । तुतस्तित्तिरिः सुमभवत्तुस्मात्तु विश्वरूपतम ऽइव सुन्त्येवु घृतस्तोका ऽइव त्वन्मधुस्तोका ऽइव त्वत्पर्णेष्वाश्चुतिता ऽएवु ᳪ रूपमिव हि स तेनाशनमावयत् ॥ ५ ॥

( त्स ) स त्वष्टा चुक्रोध । कुविन्मे पुत्रमुवधीदिति सोऽपेन्द्रमेव सोममाजह्रे स युथायᳪ सोमः प्रसुत ऽएवमुपेन्द्र ऽएवास ॥ ६ ॥

( त्से ) इन्द्रो ह वा ऽईक्षाञ्चक्रे । ( क्रऽ ) इदं वै मा सोमादन्तर्यन्तीति स युथा बलीयानुबलीयसऽएवमुनुपहूत ऽएव यो द्रोणकलशे शुक्र ऽआस तं भक्षयाञ्चकार स हैनं जिहिᳪस सोऽस्य विष्वङ्ङेवु प्राणेभ्यो दुद्राव मुखाद्धे-

अथ यदन्यस्मा अशनायास—ततस्तित्तिरिः समभवत् । तस्मात्स विश्वरूपतम इव । सन्त्येव घृतस्तोका इव त्वत, मधुस्तोका इव त्वत पर्णेष्वाश्चुतिताः । एवंरूपमिव हि स तेनाशनमावपत् ॥ ५ ॥
स त्वष्टा चुक्रोध—' कुविन्मे पुत्रमवधीद् '—इति । सोऽपेन्द्रमेव सोममाजह्रे । स यथायं सोमः प्रसुत, एवमपेन्द्र एवास ॥ ६ ॥
इन्द्रो ह वा ईक्षाञ्चक्रे—' इदं वै मा सोमादन्तर्यन्ति ' इति । स यथा बलीयानबलीयसः—एवमनुपहूत एव—यो द्रोणकलशे शुक्र आस—तं भक्षयाञ्चकार । स हैनं जिहिंस । सोऽस्य विष्वङ्ङेव

अथ यदन्यस्मा । इति ' अथ ' पानात् ' अन्यस्मै ' ' अशनाय ' यन्मुखम्, तेनतस्तित्तिरिः ' । यतो बहुरूपादन्नभक्षकान्मुखात् सम्भूत; अतः सोऽस्यन्त बहुरूपवान् दृश्यते । कथं तस्य तथात्वमिति तद्दर्शयति—सन्त्येवेति । त्वच्छब्दस्त्वशब्दसमानार्थः सर्वनामसु विकल्पेन पठितः, ' त्वत् ' एकस्मिन्नङ्गे ' घृतस्तोका इव ' घृतबिन्दवः परिदृश्यन्ते । तथा ' त्वत् ' एकत्राङ्गे मधोर्बिन्दव इव । एतदपि कुत इत्यत आह—' पर्णेषु ' पक्षकपक्षेषु ' आश्चुतिता ' आक्षरं प्राप्ता., बहुरूपाणि दृश्यन्ते । कार्यगतं वैरूप्य तत्कारणेऽपि समावयति—' एवंरूपमिव ' घृतस्तोकादिरूपमिव खलु ' सः '—' तेन ' मुखेन ' अशनं ' ' जठरम् ' ' आवपत् ' अवेतिरत्र गत्यर्थः ( धा. पा. भ्वा. प. ६०० ) अगमयत् ॥ ५ ॥
स त्वष्टेति । एवं पुत्रशिरस्सु छिन्नेषु ' स त्वष्टा ' असाविन्द्रो ' मे ' ' पुत्र ' ' कुवित् ' बहुम नाम ' अवधीत् '—' इति ' क्रुद्धो भूत्वा ' अपेन्द्रमेव ' इन्द्रेण विरहितमेव ' सोममाजह्रे ' । ' सः ' च ' सोमः ' ' यथा ' अपेन्द्रः ' प्रसुतः ' ' एव ' प्रदानेऽपि ' अपेन्द्र एव ' अभूत् ॥ ६ ॥
इन्द्रो ह वा इति । स च ' इन्द्रः ' ' इदमे ' एव सर्वेऽपि ' मा ' ' सोमात् ' व्यवहितं कुर्वत ' इति ' विचार्य—' यथा ' प्रबलो दुर्बलस्य धनमननुज्ञात एवापहरति,—' एवम् ' ' अनुपहूत एव ' द्रोणकलशे शोधितं

१–' तिर्तीर्ग्स्तरणात् ' ' तिलमात्रचित्र इति वा ' इति निरुक्तम् ( ३. ४. १. ) २–एवंविधेषु पदेषु प्रथम मत्वर्थीयेन प्रत्ययेन भाव्यम् । ततः समासः । अतएव " न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः " इति नात्र विरुध्यते । ३–अन्यार्थ इति यावत् । ४–केषाञ्चिन्मतेऽकारान्तावेव द्वावपि त्वच्छब्दौ, केषाञ्चित्तु तान्तोऽपीति विकल्पार्थः । म. पा. १ । १ । १ ( १ । १ । २७ सू. ) इति ॥ ५–अवतिरत्रेति क्वचित्पाठः । ६–' इमेऽपि च सर्वेऽपि मां सोमाद् व्यवहितं कुर्वन्तीति विचार्य ' इति क. पा. । ७–द्रोणकलशो द्रुममय, कलशाकारो वैकङ्कतः सोमरसपात्रविशेषः । अस्योपर्येव पात्रमाहरपन्ते । का. श्रौ. सू ८।७।५। इत्यम् ।

वास्य नु दुद्रावाथ सुर्वेभ्योऽन्येभ्यः प्राणेभ्योऽद्रवत्तुदद्रुः सौत्रामणीतीष्टि-स्तुस्यां तद्याख्यायते यथैनं देवा ऽअुभिपज्यन् ॥ ७ ॥

( न्स )स त्वष्टा चुक्रोध । कुविन्मेऽनुपहूतः सोममुबभक्षदिति सु स्वयमेव यज्ञवेशसं चक्रे स यो द्रोणकलशे शुक्रः पुरिशिष्ट ऽआस तं प्रवर्त्तयाञ्चका-रेन्द्रशत्रुर्वर्द्धस्वेति सोऽग्निमेव प्राप्य सुम्बभूवान्तरेव सुम्बभूवेत्यु हैक ऽआहुः सोऽग्नीषोमावेवाभिसुम्बभूव सुर्वा विद्याः सुर्वं यशः सुर्वमन्ना-द्यॅ सुर्वांॅ श्रीम् ॥ ८ ॥

---

प्राणेभ्यो दुद्राव, मुखादेवास्य न दुद्राव–अथ सर्वेभ्योऽन्येभ्यः प्राणेभ्योऽद्रवत् । तद्रुः ' सौत्रा-मणी ' इतीष्टिः, तस्यां तद् व्याख्यायते–यथैनं देवा अभिषज्यन् ॥ ७ ॥

स त्वष्टा चुक्रोध–' कुविन् मेऽनुपहूतः सोममभक्षद् ' इति । स स्वयमेव यज्ञवेशसं चक्रे । स–यो द्रोणकलशे शुक्रः परिशिष्ट आस–तं प्रवर्त्तयाञ्चकार–' इन्द्रशत्रुर्वर्धस्व ' इति । सोऽग्निमेव प्राप्य संबभूव । अन्तरेव संबभूवेत्यु हैक आहुः । सोऽग्नीषोमावेवाभिसंबभूव–सर्वा विद्याः, सर्वं यशः, सर्वमन्नाद्यम्, सर्वां श्रीम् ॥ ८ ॥

---

सोममभक्षयत् । ' स ' च भक्षितः सोमः सान्ध्यम्प्राप्नुवन् तांश्च ' निरिष्म ' हिंसितवान्–[illegible] । तत्र सर्वतो नामप्रमुखप्राणे " मुखव्यतिरिक्तेभ्यस्त्वनुतोऽभूत् । अथ [illegible]दिपदार्थरूपेण स्रुतेभ्यस्तेभ्य. सकाशात् ' सौत्रामणी ' सुत्राम्णः सम्बन्धिनी इष्टिः ' निरुक्ता । सोमे स्रुते येन प्रकारेण तमिन्द्र स्रुतसोम ' देवा ' चिकित्सितवन्तः ' तत् ' मत्रं सौत्रामणीप्रकरणे विस्पष्टमाम्नायते ॥ ७ ॥

स त्वष्टेति । अथ ' स. त्वष्टा ' मम ' सोमम् ' अनिप्रसूतमनाकारितमेवापिबदिति क्रुद्धः सन् ' स्वयमेव ' नष्टस्य यज्ञस्य ' यज्ञवेशसम् ' यज्ञहिंसामपरिहारं कृतवान् । कथं ? ' यो द्रोणकलशे ' शुक्रः ' सोमः ' परिशिष्टः ' आसीत्, ' तम् '–आदाय प्रवर्तयामास–" इन्द्रशत्रुर्वर्द्धस्व–" इत्युच्चार्य हुतवान् । ' स ' च हुतः सोमः–आग्नेयात्मिमतकाल एव पुरुषरूपेण ' सम्बभूव ' केचित् प्रवर्तनसामर्थ्यादग्निमस्पृशन्नेव मध्ये ' सबभूव ' इति ' आहुः ' ' स ' च भवन् ' अग्नीषोमावेव ' अभिव्याप्नुवन् भक्षयन् सबभूव । न केवलं जगत्कारणभूतौ तावेव किन्तु लोके या ' विद्या ' यद् ' यशः ' यद् अदनीयमन्नम्, या च ' श्रीः ' तानि सर्वाण्यभिलक्ष्य भक्षयन् ' सम्बभूव ' ॥ ८ ॥

---

१–" ते देवा अब्रुवन् सुत्रात वतैनमपाप्मनामिति तस्मात्सौत्रामणी नाम " इति ( ५। ५। ४। १२ ) नाम निर्वचनम् । " सुत्रा तवैन पाप्मनाऽत्रामहीति " इत्यादि[illegible]दिष्टं । ( ५। ५। ४। १२॥ १२। ७। १। १० ॥ ) ॥ २–इहैवोत्तर भागे द्रष्टव्यं । उत्तरभागेहि [illegible] वानुर्यन्तृपदार्थ [illegible] प्रतिपादनमिति ॥ ३–' अनिप्रसूतमनाकारित एवापिबत् ' इति क पु ।

तस्मै ह स्म पूर्वाह्णे देवाः । ( ऽ ) अुशनमभिहरन्ति मध्यन्दिने मनुष्या ऽअपराह्णे पितरः ॥ १२ ॥

स वा ऽइन्द्रस्तथैव तुतश्चरन् । ( न्न ) अग्नीषोमा ऽउपमन्त्रयाञ्चक्रेऽग्नीषोमौ युवं वै मम स्थो युवयोरहमस्मि नु युवयोरेष किञ्चन कं म ऽइमं दस्युं वर्द्धयथ ऽउप मा व्वर्तेथामिति ॥ १३ ॥

तौ होचतुः । किमावयोस्ततः स्यादिति ताभ्यामेतमग्नीषोमीयमेकादशकपालं पुरोडाशं निरवपत्तस्मादग्नीषोमीय ऽएकादशकपालः पुरोडाशो भवति ॥ १४ ॥

---

तस्मै ह स्म पूर्वाह्णे देवा अशनमभिहरन्ति, मध्यन्दिने मनुष्याः, अपराह्णे पितरः ॥ १२ ॥

स वा इन्द्रस्तथैव तुतश्चरन्नग्नीषोमावुपमन्त्रयाञ्चक्रे—"अग्नीषोमौ ! युवं वै मम स्थो, युवयोरहमस्मि न युवयोरेष किञ्चन, कं म इमं दस्युं वर्धयथ । उप मावर्तेथाम्" इति ॥ १३ ॥

तौ होचतु—"किमावयोस्ततः स्याद्" इति । ताभ्यामेतमग्नीषोमीयमेकादशकपालं पुरोडाशं निरवपत् । तस्मादग्नीषोमीय एकादशकपालः पुरोडाशो भवति ॥ १४ ॥

---

शाद् यत्राप्यमुक्तेष्वर्थोऽवद् दूर गच्छति ताव मात्र प्रतिक्षण 'तिर्यङ्' उभयपार्श्वेन 'ववृधे' । 'प्राङ्' 'प्रत्यञ्चम्' अवर्द्धत । एतत् पश्चाद्दृष्टेरप्युपलक्षणम् । 'अपर' 'पूर्वं' च 'समुद्र' तयोः मध्यप्रदेशात्समुद्रावपि 'अवरुधौ' शरीरेणवृताववाक् चकारेत्यर्थ । यावच्छाकम् प्रवृद्ध आस, तावत्तावत् मद्दोऽन्नमक्षक एवाभूत् ॥ ११ ॥

तस्मै ह स्मेति । एव वहाशिने 'तस्मै' 'देवा' 'मनुष्या' 'पितरश्च' पूर्वमध्यन्दिनापराह्णेषु क्रमेण सर्वेन 'अशनम्' प्रयच्छन्ति ॥ १२ ॥

स वा इन्द्र इति । इन्द्रस्तु वृत्रशरीरस्य ह्रादिकमानुसारेणैवेषदीषं प्रयुक्तो दूरं एव 'चरन्' भोजनमसहमानो वृत्रमनुगतौ 'अग्नीषोमौ' इत्युक्त्वानुमन्त्रयामास । कथ ? हे 'अग्नीषोमौ !' 'युवां' 'मम' स्त भवथ, युवयोरह स्व भवामि । यथाऽह युवयोस्तथा 'एष' वृत्रो 'न किञ्चन' किमपि न भवति । अत 'कम्' कीदृशमहत्त्वोपेत 'दस्यु' 'वर्द्धयथ' ? अतोऽस्मु पारित्यज्य मां प्रति 'उपावर्तेथाम्' । 'इति'— इन्द्रः उपमन्त्रणप्रकारसमाप्त्यर्थ ॥ १३ ॥

तौ होचतुरिति । अथ 'तौ' इन्द्रम् 'ऊचतु—' 'तत' वृत्रवदननिर्गमनात् 'आवयो' 'किं' फल लभ्य 'स्यात्' ? " 'इति' । स एवमुक्त 'ताभ्याम्' 'एतम्' इदानीं विधीयमानम् 'एकादशकपालं पुरोडाशम्' अग्नीषोमदेवताक कृत्वा निरव ( प ) वान्,—तयोरिदमिति कल्पितवानित्यर्थ ।

इदानीं त याग विधत्ते—तस्मादिति । अग्नीषोमौ देवते यस्य स 'अग्नीषोमीयः', एकादशसु कपालेषु सस्कृत पुरोडाश 'एकादशकपाल' स भवेत्, पौर्णमास्यां कर्तव्य ॥ १४ ॥

---

१—तैत्तिरीयसंहितायामपीत्थं प्रकरणं प्रकारान्तरेणाम्नायते ( २ ५ २ ) । २—"तस्मै देवा" ( ४ । १ । २४ ) इत्यत्रैव व्याकरणवार्त्तिकभाष्यादिष्वदृश्यत इति वा सू ४ । २ । ३१ । " देवताद्वन्द्वे च " पा० सू० ६ । ३ । २६ । इति "अग्ने रुत्स्तोमसोमा० ( ८ । ३ । ८२ ) इति त्व । ३—"सास्य देवता" इति पा सू ४ । २ । २४ ॥

तावेनमुपावबृततुः । ( स्ता ) तावनु सर्वे देवाः प्रेयुः सर्वा विद्याः सर्वं यशः सर्वमन्नाद्यꣳ सर्वा श्रीस्तेनेष्ट्वेन्द्र ऽएतदभवद्यदिदमिन्द्र एष उ पौर्णमासस्य बन्धुः स यो हैवं विद्वान्पौर्णमासेन यजत ऽएताꣳ हैव श्रियं गच्छत्येवं यशो भवत्येवमन्नादो भवति ॥ १५ ॥

तद्वेव खलु हतो वृत्रः । स यथा दृतिर्निष्पीत ऽएवꣳ संल्लीनः शिश्ये यथा निर्धूतसक्तुर्भस्त्रैवꣳ संल्लीनः शिश्ये तमिन्द्रोऽभ्यादुद्राव हनिष्यन् ॥ १६

( न्तु ) स होवाच । मा नु मे प्रहार्षीस्त्वं वै तदेतर्ह्यसि यदहं व्येव मा

---

तावेनमुपावबृततुः, तावनु सर्वे देवाः प्रेयुः सर्वा विद्याः, सर्वं यशः, सर्वमन्नाद्यम्, सर्वा श्रीः । तेनेष्ट्वेन्द्र एतदभवद्-यदिदमिन्द्रः । एष उ पौर्णमासस्य बन्धुः । स यो हैवं विद्वान् पौर्णमासेन यजते-एतां हैव श्रियं गच्छति, एवं यशो भवति, एवमन्नादो भवति ॥ १५ ॥

तद्वेव खलु हतो वृत्रः, स यथा दृतिर्निष्पीतः,-एवं संल्लीनः शिश्ये । यथा निर्धूतसक्तुर्भस्त्रा-एवं संल्लीनः शिश्ये । तमिन्द्रोऽभ्यादुद्राव हनिष्यन् ॥ १६ ॥

स होवाच-" मा नु मे प्रहार्षीः, त्वं वै तदेतर्ह्यसि-यदहम्; व्येव मा कुरु, मामुया भूवम् "

---

तावेनमिति । अथ ' तौ ' ' एनम् ' इन्द्र प्रत्युपाद्रावभूताम् । ' तावनु ' ' सर्वे ' अपि वृत्रमुखान्तर्गताः ' देवाः ' ' प्रेयुः ' निर्ययुः । तथा वृत्रेण भक्षिता विद्यायशोऽन्नश्रियः ' सर्वाः ' अपीन्द्रं प्रति निर्गताः । ' यत् ' ' इदम् ' इदानीं परिदृश्यमानप्रकारमिन्द्रस्य सर्वाधिपत्यमस्ति, तत् ' तेन ' अग्नीषोमीयैकादशकपालस्यागेन ' इष्ट्वा ' ' अभवत् ' । उक्तमर्थं निगमयति-एष उ इति । ' एष ' एव " त्वष्टुर्ह वै-" इत्याद्युपक्रम्य " तेनेष्ट्वेन्द्र एतदभवत् "-इत्यन्तेनोक्त एव ' पौर्णमासस्य ' पौर्णमास्यामसाधारण्येनानुष्ठेयस्य हविषो ' बन्धुः ' बन्धकोऽर्थनियामकः । एतदेव ब्राह्मणमित्यर्थः । विहितमर्थमनूद्य प्रशंसति-यो हैवं विद्वानिति । अत्र यद्यपि पौर्णमासीशब्देन कालवाचिना तत्कालक्रियमाणं सर्वं कर्माभिधेयमिति । तथाप्याग्नेयाष्टाकपालस्य साधारण्याद्, वाक्यशेषे श्रीप्रभृतेरेव फलत्वेन श्रवणाच्चाग्नीषोमीय एकादशकपाल एव परिगृह्यते । ' यः ' यजमानः ' एवम् ' उक्तमर्थं ' विद्वान् ' जानन्, ' पौर्णमासेन ' पौर्णमास्यां क्रियमाणेनाग्नीषोमीयेन ' यजते ' अनुतिष्ठति ' सः ' ' एताम् ' इन्द्रेणानुभूतां ' श्रियम् ' तथाविधं यशोऽन्नं च प्राप्नोति ॥ १५ ॥

तद्वेव खल्विति । अथ तदानीमग्नीषोमादिनिर्गमनानन्तरमेव ' वृत्रो ' ' हतः ', निष्पीतो दृतिरिव चर्मनिर्मितपात्रमिव, सः यथा ' संल्लीनः ' सङ्कुचिताङ्गःशिश्ये इति, एवं संल्लीनो भूमावशयिष्ट, यथा ' निर्धूतसक्तुका भस्त्रा ' चर्ममयी संल्लीना, ' तद्वत् ' ' संल्लीनः ' शेते; कुक्षिगतानां सक्तुस्थानीयानां देवानाम्,-उदकस्थानीयानामग्न्यादीनां च सद्भावात् दृष्टान्तद्वयाभिधानम् । अथ शयानं वृत्रं हननेच्छयेन्द्रः शीघ्रमाजगाम ॥ १६ ॥

स होवाचेति । तं दृष्ट्वा वृत्रोऽब्रवीत्-" इदानीमेतत् सर्वं त्वमेव भवसि, पूर्वं यदहं सर्वमभवम्; अतो

---

१-' संल्लीनः ' इति क. पा. एवमग्रेऽपि । २-' सङ्कुचितकृशतनुः पतति ' इति पा. । ३-' अथ शीघ्रं शयानं हननेच्छया ' इति क. पा. ।

कुरु मामुया भूवमिति स वै मेऽन्नमेधीति तथेति तं द्वेधान्वभिनत्तस्य यत्सौम्यं न्यक्तमास तं चन्द्रमसं चकाराथ यदस्यासुर्यमास तेनेमाः प्रजा उदरेणाविध्यत्तस्मादाहुर्वृत्र एव तर्ह्यन्नाद आसीद्वृत्र एतर्हीतीदं हि यदसावापूर्यतेऽस्मादेवैतल्लोकादाप्यायतेऽथ यदिमाः प्रजा अशनमिच्छन्तेऽस्मा एवैतद्वृत्रायोदराय बलिं हरन्ति स यो हैवमेतं वृत्रमन्नादं वेदान्नादो हैव भवति ॥ १७ ॥

ता उ हैता देवता ऊचुः ( याः ) या इमा अग्नीषोमावन्वाजग्मुरग्नी-

इति । स वै " मेऽन्नमेधि " इति । " तथा " इति । तं द्वेधान्वभिनत्, तस्य यत् सौम्यं न्यक्तमास—तं चन्द्रमसं चकार । अथ यदस्यासुर्यमास—तेनेमाः प्रजा उदरेणाविध्यत् । तस्मादाहुः—' वृत्र एव तर्ह्यन्नाद आसीद्, वृत्र एतर्हि ' इति । इदं हि यदसावापूर्यते—अस्मादेवैतल्लोकादाप्यायते । अथ यदिमाः प्रजा अशनमिच्छन्ते—अस्मा एवैतद् वृत्रायोदराय बलिं हरन्ति । स यो हैवमेतं वृत्रमन्नादं वेद—अन्नादो हैव भवति ॥ १७ ॥

ता उ हैता देवता ऊचुः—या इमा अग्नीषोमावन्वाजग्मुः " अग्नीषोमौ ! युवं वै नो भूयिष्ठभाजौ स्थः, ययोर्वामिदम् । युवयोरस्मानन्वाभजतम् " इति ॥ १८ ॥

व्याकुर्वन शरीरं विविधम्, आ सर्वतो मेऽन्नपर्यन्तं कुरु, विदारयेत्यर्थः । ' अमुया ' इदानीमनुभूयमानप्रकारया स्थित्या ' मा भूवम् ' सर्वदा न भवामि, ' इति ' । ' स ' एवमुक्त इन्द्रः, " तर्हि ममान्नं भव " इत्युवाच । ' तथा ' अस्तु ' इति ' उक्तम् । ' तम् ' इन्द्रो ' द्वेधा ' ' अन्वभिनत् ' तदनुक्रमेण व्यदारयत् । तेन ' यत् ' सौम्यं श्रेष्ठं सुतमासीत्, ' तं चन्द्रमसं चकार ' प्रतिनिर्देशापेक्षया पुंल्लिङ्गता । ' यत् ' ' असुर्यम् ' असुरेभ्यो हितम्—उच्छिष्टमासीत्, ' तेन ' ' इमा ' सर्वा अपि प्रजा उदरप्रदेशेन अयुध्यत—तद्रूपेणोदरं धारयामासेत्यर्थः । यस्मादेव ' तस्माद् ' य कश्चिद् यदि बहून् भक्षयेत्, ' तर्हि ' तदा सर्वेऽपि जना इदानीं वृत्र एतर्हि—अन्नाद आसीद्—' इत्याहु ' । प्रसिद्धे सार्वत्रिकत्वप्रदर्शनाय दृष्टान्तः । उक्तमर्थं समर्थयते—एतर्हीति । ' असौ ' चन्द्रः पूर्वपक्षे ' आपूर्यते '—इति यत् तम् ' इदं हि ' किमिदम् ? तदाह—' अस्मात् ' ' लोकादेव ' चन्द्रः ' आप्यायते ' अस्माल्लोकाच्चन्द्रस्याप्यायनप्रकारमुपरिष्टाद् वक्ष्यते—" तदेनमन्नम् ओषधिभ्य सम्भृत्याहुतिभ्योऽभिजनयति, स एष आहुतिभ्यो जातः पश्चाद्दृशे "—इति । यदा ' इमाः ' बुभुक्षिता ' प्रजा ' ' अशनमिच्छन्ति ' तदा ' अस्मा एव वृत्राय ' षष्ठ्यर्थे चतुर्थी । वृत्ररूपाय ' उदरायैव ' ' बलिं हरन्ति ' । अतो वृत्रभागविशेषस्यान्नरूपेण स्थापनं युक्तमित्यर्थः । ' स यो हैवमिति ' ज्ञानफलम् ॥ १७ ॥

प्रयाजानन्तरमाज्यभागौ वक्तव्यावन्तरेणौ, अनाम्नावग्नीषोमीयपुरोडाशप्रसङ्गेन विधातुमाह—ता उ हेति ।

१—"अथ कुरु" इति क्वचित् पा । २—" यदस्य सौम्य " इत्यादि पा । ३—विशेषस्य चन्द्रमसोऽपेक्षयेत्यर्थः । " हविष्यमानमतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तत्तल्लिङ्गमुपाददते " इति न्यायादिति भावः । ४—असुरशब्दस्य गवादिषु पाठात् । " तस्मै हितं " (पा सू ५ । १ । ५) इत्यर्थे " गवादिभ्यो यत् " (पा सू ५ । १ । २) इति यत् । वस्तुतोऽत्र "असुरस्य स्वं" (पा सू ४ । ४ । १२३) इति यदित्येव स्यात्पुक्तम् । ५—अयुध्यत्—इति पा । ६—इहैवाग्ने ( ६–४–१५ ) इत्यत्र द्रष्टव्यम् । ७—पा सू ३ । ३ । ६३ । वा. १ ( १५०३ ) ।

पोमौ युवं वै नो भूयिष्ठभाजौ स्थो युयोर्वामिदं युवयोरस्मानन्वाभजतमिति ॥ १८ ॥

तौ होचतुः । किमावयोस्ततः स्यादिति यस्यै कस्यै च देवतायै हविर्न्निर्व्वपांस्तद्वां पुरस्तादाज्यस्य यजानिति तस्माद्यस्यै कस्यै च देवतायै हविर्न्निर्व्वपन्ति तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति तन्न सौम्येऽध्वरे नु पशौ यस्यै कस्यै च देवतायै हविर्न्निर्व्वपानिति ह्यब्रुवन् ॥ १९ ॥

( न्त्सु ) स हाग्निरुवाच । मय्येव वः सर्व्वेभ्यो जुह्वतु तद्वोऽहं मय्याभजामीति तस्मादग्नौ सर्व्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुरग्निः सर्व्वा देवता इति ॥ २० ॥

( त्यु ) अथ ह सोम उवाच । मामेव वः सर्व्वेभ्यो जुह्वतु तद्वोऽहं मय्या-

---

तौ होचतुः—" किमावयोस्ततः स्याद् " इति । " यस्यै कस्यै च देवतायै हविर्निर्वपान्—तद् वां पुरस्तादाज्यस्य यजान् " इति । तस्माद् यस्यै कस्यै च देवतायै हविर्निर्वपन्ति—तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति । तन्न सौम्येऽध्वरे, न पशौ । ' यस्यै कस्यै च देवतायै हविर्निर्वपान् ' इति ह्यब्रुवन् ॥ १९ ॥

स हाग्निरुवाच—" मय्येव वः सर्वेभ्यो जुह्वतु, तद्वोऽहं मय्याभजामि " इति । तस्मादग्नौ सर्वेभ्यो देवेभ्यो जुह्वति—तस्मादाहुः—' अग्निः सर्वा देवताः ' इति ॥ २० ॥

अथ ह सोम उवाच—" मामेव वः सर्वेभ्यो जुह्वतु, तद्वोऽहं मय्याभजामि " इति । तस्मात् सोमे सर्वेभ्यो देवेभ्यो जुह्वति, तस्मादाहुः—' सोमः सर्वा देवताः ' इति ॥ २१ ॥

---

वृत्रदेहाद् ' अग्नीषोमावनु ' निर्गता. सर्वा ' देवताः ' ' तौ ' अग्नीषोमौ प्रतीदमब्रुवन्—" यतो वृत्रदेहान्निर्गतयोर्युवयोरिदं पुरोडाशाद्यं[1] प्रातिस्विकमभून्, अतो युवामेव प्रभूतभागभाजौ भवथः, ' युवयोः ' मध्ये ' अस्मान् ' अपि ' अन्वाभजतम् ", इति ॥ १८ ॥

तौ होचतुरिति । अथ ' तावूचतुः '—" ' ततः ' युष्मदनुप्रवेशाद् ' आवयोः ' ' किं, ' स्यात् ? ' " ' इति ' उक्ता देवतास्तयोः—" हे अग्नीषोमौ ! लोके यष्टारो ' यस्यै कस्यै च देवतायै ' इन्द्रादिदेवतानां मध्ये यां काञ्चिद्देवतां प्रति ' हविः ' ' निर्वपान् ' निर्वपेयुः, तत्र च निरुप्तप्रधानदेवताभ्यः पूर्वम् ' आज्यस्य ' औज्यं ' यजान् ' यजेयुः " इदानीं विधत्ते—तस्मादिति । ' तस्माद् ' देवैर्दत्तत्वाद् यत्र निर्वपति, तत्र ' आज्यभागा[2]वग्नीषोमाभ्याम् ' अनुष्ठेयौ । आज्यभागौ प्रशंसति—तन्न सौम्ये इति । पशुसोमयोराज्यभागौ ' न ' कुर्यात् । निरंशाभावादेव पशुसोमयोरप्राप्तस्याज्यभागस्य पुनर्निषेधेनैष्टिकमाज्यभागविधानं स्तूयते । यथा दशमाध्यायस्याष्टमे पादे द्वितीयाधिकरणे—' न सौम्येऽध्वर इत्यत्र किं निषिध्यते, उत पर्युदस्यते, अथार्थवादः ? ' इति त्रेधा विकल्प्यार्थवाद इति राद्धान्तितम्[3] । सोमपश्वोस्तदप्राप्तौ कारणमाह—यस्यै कस्यै चेति । ' निर्वपानिति ह्यब्रुवन् ' इति निर्वापस्य विशेषितत्वात्, तयोस्तदभावादिति भाव. ॥ १९ ॥

इदानीं ताभ्यां देवताभ्यः कृतमुपकार दर्शयति स हाग्निरित्यादिना, अथ ह सोम इत्यादिना च । अग्निः

---

१–" प्रातिस्विकमसाधारणधर्मे " इति विकाण्डशेषकोशः ॥ २–' आज्यभागम् ' क० पाठः । ३–" अपूर्वेचार्थवादःस्यात् " इत्यत्र मीमांसादर्शने १०-८-१ ।

भजामीति तस्मात्सोमꣳ सर्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुः सोमः सर्वा देवता ऽइति ॥ २१ ॥

( त्यु ) अथ यदिन्द्रे सर्वे देवास्तस्थानाः ( स्तु ) तस्मादाहुरिन्द्रः सर्वा देवता ऽइन्द्रश्रेष्ठा देवा ऽइत्येतद्ध वै देवास्त्रेधैकदेवत्या ऽअभवन्त्स यो हैवमेतद्वेदैकधा हैव स्वानाꣳ श्रेष्ठो भवति ॥ २२ ॥

द्वयं वा ऽइदं न तृतीयमस्ति । (स्त्या) आर्द्रं चैव शुष्कं च यच्छुष्कं तदाग्नेयं यदार्द्रं तत्सौम्यमथ यदिदं द्वयमेवाथ किमेतावत्क्रियत ऽइत्यग्नीषोमयोरेवाज्यभागावग्नीषोमयोरुपाꣳशुयाजोऽग्नीषोमयोः पुरोडाशो यद्वत एकतमेनैवेदꣳ सर्वमाप्नोत्यथ किमेतावत्क्रियता ऽइत्यग्नीषोमयोर्हैवैतावती विभूतिः प्रजातिः ॥ २३ ॥

---

अथ यदिन्द्रे सर्वे देवास्तस्थानास्तस्मादाहुः–' इन्द्रः सर्वा देवताः, इन्द्रश्रेष्ठा देवाः ' इति । एतद् वै देवास्त्रेधैकदेवत्या अभवन् । स यो हैवमेतद् वेद, एकधा हैव स्वानां श्रेष्ठो भवति ॥ २२ ॥

द्वयं वा इदं न तृतीयमस्ति–आर्द्रं चैव, शुष्कं च । यच्छुष्कं–तदाग्नेयम्, यदार्द्रं तत्सौम्यम् । अथ यदिदं द्वयमेव–अथ किमेतावत् क्रियते ? इति । अग्नीषोमयोरेवाज्यभागौ, अग्नीषोमयोरुपांशुयाजः, अग्नीषोमयोः पुरोडाशः । यद्वत एकतमेनैवेदं सर्वमाप्नोति–अथ किमेतावत् क्रियता ? इति । अग्नीषोमयोर्हैवैतावती विभूतिः-प्रजातिः ॥ २३ ॥

---

सर्वदेवार्थमाहुत्याधारतालक्षणम्–सोमस्तु सर्वदेवतानामाहुतिलक्षणम्, उपकार कृतवन्तौ । यस्मादेव ' तस्माद् ' वेदवादिन –अग्ने सोमस्य च सर्वदेवतात्मकताम् ' आहुः ' ॥ २० ॥ २१ ॥

अथ यदिन्द्र इति । ' यद् ' यस्माच ' इन्द्रे ' सर्वे देवा । ' तस्थाना ' स्थितवन्त , अत ' इन्द्रः सर्वा देवता ' अत्र कारणमाह–इन्द्रज्येष्ठा देवा इतीति । ज्येष्ठत्व [1] "तावेनमुत्तावकृतनुत्तावनु सर्वे देवा "–इत्यादिनोक्तत्वादवगन्तव्यम् । ' एतद् ' एतेनैव खलु कारणेन सर्वेऽपि ' देवा ' ' त्रेधा ' त्रिप्रकारेण अग्निसोमेन्द्रात्मका ' एकदेवत्या ' एकैकदेवतार्था । ' अभवन् ' तादर्थ्ये यत् । उक्तार्थज्ञ प्रशंसति–स य इति । अग्न्यादीनामेकदेवत्वलक्षणश्रेष्ठत्वपरिज्ञानेन स्वयमपि स्वकीयानां मध्ये एक एव ' श्रेष्ठो भवति ' ॥ २२ ॥

आज्यभागोपांशुयाजपुरोडाशानां यदग्नीषोमदेवताकत्वमस्ति, तत् प्रशंसितुमाह–द्वयं वा इत्यादि । लोके पदार्था सर्वेऽपि शुष्कार्द्रभावेन द्विविधा , अत , तृतीयविधस्याभावाद्–' यच्छुष्क तदाग्नेयम् ' भविष्यति, यदार्द्रं ' तत्सौम्यम् ' अतो लोके विद्यमान वस्तुद्वयमेव, अस्मादेव कारणात् -अग्नीषोमयोर्योगेन समाप्त भविष्यति । ' किम् ' ' एतावद् ' बहु ' क्रियते ' ' इति ' ब्रह्मवादिनां चोद्यम् । एतावदिति सग्रहेणोक्तस्य विवरणम्–अग्नीषोमयोरिति । अग्नीषोमयोरेवाज्यभागावित्यादित्रयाणामपि प्रधानत्वोपपत्तिमाह–अग्नीषोमयोर्हे-

---

१–' इन्द्रश्रेष्ठा ' इति ' भाष्यसम्मत ' पाठः । २–' येनेन्द्र तावेनमुत्तावकृतनु ' इत्यादि पाठ । ३–अस्मिन्नेव ब्राह्मणे पुस्तके १५ कण्डिका द्रष्टव्या ।

सूर्य एवाग्नेयः । ( ख ) चन्द्रमाः सौम्योऽहरेवाग्नेयꣳ रात्रिः सौम्या य एवापूर्यतेऽर्द्धमासः स आग्नेयो योऽपक्षीयते स सौम्यः ॥ २४ ॥

( ऽ ) आज्यभागाभ्यामेव । सूर्याचन्द्रमसावाप्नोत्युपाꣳशुयाजेनैवाहोरात्रे आप्नोति पुरोडाशेनैवार्द्धमासावाप्नोतीत्यु हैक आहुः ॥ २५ ॥

( स्तु ) तदु होवाचासुरिः । ( गु ) आज्यभागाभ्यामेवातो यतमे वा यतमे वा द्वे आप्नोत्युपाꣳशुयाजेनैवातो यतमे वा यतमे वा द्वे आप्नोति पुरोडाशेनैवातो यतमे वा यतमे वा द्वे आप्नोति सर्वं म आप्तमसत्सर्वं जितꣳ सर्वेण वृत्रꣳ हनानि सर्वेण द्विषन्तं भ्रातृव्यꣳ हनानीति तस्माद्वा एतावत्क्रियत इति ॥ २६ ॥

---

सूर्य एवाग्नेयश्चन्द्रमाः सौम्यः ( १ ) । अहरेवाग्नेयम्, रात्रिः सौम्या ( २ ) । य एवापूर्यते अर्द्धमासः स आग्नेयोऽपक्षीयते स सौम्यः ( ३ ) ॥ २४ ॥

आज्यभागाभ्यामेव सूर्याचन्द्रमसावाप्नोति, उपांशुयाजेनैवाहोरात्रे आप्नोति, पुरोडाशेनैवार्द्धमासावाप्नोति,—इत्यु हैक आहुः ॥ २५ ॥

तदु होवाचासुरिः—आज्यभागाभ्यामेवातो यतमे वा यतमे वा द्वे आप्नोति । उपांशुयाजेनैवातो यतमे वा यतमे वा द्वे आप्नोति । पुरोडाशेनैवातो यतमे वा यतमे वा द्वे आप्नोति । सर्वं मे आप्तमसत्, सर्वं जितम्, सर्वेण वृत्रं हनानि, सर्वेण द्विषन्तं भ्रातृव्यं हनानि, इति । तस्माद् वा एतावत् क्रियते—इति ॥ २६ ॥

---

इत्यादिना । 'एतावती' सूर्यचन्द्रादिभेदेन त्रेधा 'विभूतिः' विनयो बहुत्वतः । विभूतिरैश्वर्यस्य व्याख्यानं प्रख्यातीरिति । 'प्रख्यातिः' प्रकर्षेणोत्पत्तिः ॥ २३ ॥

सूर्यादियुगलत्रयस्याग्नीषोमात्मकतां विभज्य दर्शयति—सूर्य एवेति । सूर्यस्याग्नेयत्वे चन्द्रमसः सौम्यत्वे च [illegible] हेतुः । [illegible] सवितुः किरणानामनुक्रमेण चन्द्रमस्युपचयात् ; [illegible] सौम्यत्वं च क्रमेण सूर्योपगमने सति सर्वांशकिरणोपगमादिति द्रष्टव्यम् ॥ २४ ॥

अस्यैवं किं तत्र इत्यत आह—आज्यभागाभ्यामेवेति । [illegible] केचिदाहुः ॥ २५ ॥

तदु होवाचेति । 'आसुरिः' स्वमतं 'उवाच' [illegible] सूर्यादिषु युगलत्रयात्मिकासु त्रिविधासु विभूतिषु 'यतमे वा यतमे वा' 'द्वे' वस्तुनी, 'यतमे वा' अहोरात्ररूपे वा, शुक्लकृष्णपक्षरूपे वा, द्वे 'आप्नोति' वीप्सया त्रिविधान्यपि युगलानि परिगृह्यन्ते । [illegible] त्रिविधानपि [illegible] सर्वान् मन्त्रांस्तुरे-

---

१–विनयः इति क्वचित्पाठः । २–[illegible] इति क्वचित्पाठः । ३–[illegible] इति क. ग. ।

तदाहुः । किमिदं जामि क्रियतेऽग्नीषोमयोरेवाज्यस्याग्नीषोमयोः पुरोडाशस्य यदनन्तर्हितं तेन जामीत्यनेन ह त्वेवाजाम्याज्यस्येतरं पुरोडाशस्येतरं तदन्यदिवेतरमन्यदिवेतरं भवत्यृचमनूच्य जुषाणेन यजत्यृचमनूच्यर्चा यजति तदन्यदिवेतरमन्यदिवेतरं भवत्यनेन ह त्वेवाजाम्युपांश्वाज्यस्य यजत्युच्चैः पुरोडाशस्य स यदुपांशु तत्प्राजापत्यꣳ रूपं तस्मात्तस्यानुष्टुभमनुवाक्यामन्वाह वाग्घ्यनुष्टुब्वाग्घि प्रजापतिः ॥ २७ ॥

---

तदाहुः–किमिदं जामि क्रियते–अग्नीषोमयोरेवाज्यस्य, अग्नीषोमयोः पुरोडाशस्य, यदनन्तर्हितं तेन जामि–इति । अनेन ह त्वेवाजामि–आज्यस्येतरम्, पुरोडाशस्येतरम्–तदन्यदिवेतरमन्यदिवेतरं भवति । ऋचमनूच्य जुषाणेन यजति, ऋचमनूच्य ऋचा यजति–तदन्यदिवेतरमन्यदिवेतरं भवति । अनेन ह त्वेवाजामि–उपांश्वाज्यस्य यजति, उच्चैः पुरोडाशस्य । स यदुपांशु–तत् प्राजापत्यं रूपम् । तस्मात्तस्यानुष्टुभमनुवाक्यामन्वाह । वाग् ह्यनुष्टुप्, वाग् हि प्रजापतिः ॥ २७ ॥

---

त्वाचार्यो मन्यते । भाष्यकृदपि निगमयति–तस्मादिति । 'तस्माद्' यस्मादेकैकेन सर्वविभूतिराप्ता भवति, तस्मात् कारणाद् एतावत् 'यागत्रयमप्यग्नीषोमीयमेव' क्रियते ' ॥ २६ ॥

अथाज्यभागादियागत्रयद्रव्ययोराज्यपुरोडाशयोरेकदेवतात्वप्रयुक्तं जामितादोषमाक्षिप्य द्रव्यमन्त्रधर्माणां भेदेन तद्दोषं परिहरति–तदाहुरित्यादिना । आज्यपुरोडाशयोः, प्रदानमिति शेषः । अथवा 'आज्यस्य' 'पुरोडाशस्य' वा षष्ठ्यावपि 'अग्नीषोमयो' एव दृश्यत इत्यर्थः । कथमेतावता जामितेति, तत्राह–यदिति । एकत्र 'यद्' यस्तुद्दिश्य तद्विलक्षणेन वस्त्वन्तरेणाव्यवहितम्, 'तेन' अव्यवधानेन तत्तस्तु 'जामि' भवति । अत्र तु व्यवधानमाश्रयेण 'अनेन' वक्ष्यमाणेन च खल्वजामि । केनेति–उच्यते–'आज्यस्य' द्रव्यस्य 'इतरम्' इतरत् कर्म–उपांशुयाजाख्यम्, तथा 'पुरोडाशस्येतरम्' आज्याख्यम्, अन्योन्यापेक्षयोरनयोरितरत्वम् । अन्यदिवेति । द्रव्यभेदादेकदैवत्यमपि धर्मद्वयम् 'अन्यदिवान्यदिव' भवतीत्यर्थः, अतोऽनयोर्न जामिताऽस्ति । द्वितीयः परिहारः–आज्यभाग प्रधानद्वय वति कोटिद्वय विषयीकृत्य प्रवृत्त इति द्रष्टव्यम् । (मन्त्रभेदेन आज्यभाग-प्रधानद्वययोरजामित्वम्,) प्रधानद्वययो 'जुषाण'–इत्यस्यासम्भवात् । यद्यप्याज्यभागप्रधानयोर्दैवतैक्यम्, तथाप्याज्यभागस्य 'ऋचम्' "अग्निर्वृत्राणि"–(वा स. ३३ । ९ ।) "त्वं सोमासि"–इत्यादिकामनुवाक्यां कृत्वा "जुषाणो अग्निराज्यस्य वेतु"–"जुषाण सोम"–(तै० ब्रा० ३ । ५ । ६ । १, २) इति 'जुषाणेन यजति,' प्रधानाभ्यां तु क्रमेण "अग्नीषोमावमं सु मे"–(ऋ० १. ९३–१, २.) "अग्नीषोमा सवेदसा"–(ऋ स १ ९३ ९ । तै ब्रा. ३. ५. ७. ४.) इत्यनूच्य, "आन्यं दिवो मातरिश्वा जभार–" (ऋ १ ९३ ६) "युवमेतानि"–(ऋ. स. १. ९३. ५ । तै. ब्रा. ३. ५. । ७ ४) इत्यृग्भ्यां यजति । अन्यदिवेत्यादि । पूर्ववत् दोषः । तथाऽऽज्यपुरोडाशयोरप्युपांशूच्चैस्त्वभेदादप्यजामित्वम् । "तावब्रूतामग्नीषोमा-वाज्यस्यैव नावुपांशु पौर्णमास्या यजन्निति"–इत्यन्तरादुपांशुत्वविधानं युक्तम् । विहितमाज्यस्योपांशुत्व प्रशंसति–

---

१–'तथा तत्परिहरति' इति क पा । २–'द्वितीय परिहार'–इत्यादिकं नास्ति क्वचित् । ३–नास्त्येतत् क्वचित् । ४–'इत्यवयवौ' 'अग्नीषोमावमं सु मे' 'आन्यं दिवो मातरिश्वा जभार' 'अग्नीषोमौ युवमेतानि' इत्यृग्भ्यां यजति' इति क्वचित्पाठः ।

( रे ) एतेन वै देवाः । ( ऽ ) उपांशुयाजेन यं यमसुराणामकामयन्त तमुपत्सर्य वज्रेण वषट्कारेणाघ्नंस्तथो ऽएवैष ऽएतेनोपांशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्यमुपत्सर्य वज्रेण वषट्कारेण हन्ति तस्मादुपांशुयाजं यजति ॥ २८ ॥

स वा ऽऋचमनूच्य जुषाणेन यजति । तदन्विमा ऽअन्यतरतोदन्ताः प्रजाः प्रजायन्तेऽस्थि ह्यृगस्थि हि दन्तोऽन्यतरतो ह्येतदस्थि करोति॥२९॥

( त्य ) अथऽर्चमनूच्यऽर्चा यजति । तदन्विमा ऽउभयतोदन्ताः प्रजाः प्रजायन्तेऽस्थि ह्यृगस्थि हि दन्त ऽउभयतो ह्येतदस्थि करोत्येता वा

एतेन वै देवा उपांशुयाजेन यं यमसुराणामकामयन्त–तमुपत्सर्य वज्रेण वषट्कारेणाघ्नन्, तथो एवैष एतेनोपांशुयाजेन पाप्मानं द्विषन्तं भ्रातृव्यमुपत्सर्य वज्रेण वषट्कारेण हन्ति । तस्मादुपांशुयाजं यजति ॥ २८ ॥

स वा ऋचमनूच्य जुषाणेन यजति, तदन्विमा अन्यतरतोदन्ताः प्रजाः प्रजायन्ते । अस्थि हि ऋग्, अस्थि हि दन्तः, अन्यतरतो ह्येतदस्थि करोति ॥ २९ ॥

अथ ऋचमनूच्यर्चा यजति, तदन्विमा उभयतोदन्ताः प्रजाः प्रजायन्ते । अस्थि हि ऋग्, अस्थि

यदुपांश्विति । उपांशुत्वस्यानिरुक्तत्वात्–प्रजापतेरपि सर्वात्मकत्वेन तथात्वात्प्रजापतिरूपत्वम् । 'तस्मात्'– उपांशोः प्रजापतिरूपत्वात् 'तस्य' प्रजापतेर्हविनामनुष्टुप्छन्दस्काम् " अग्नीषोमा यो अद्य वाम् "–इत्येताम्, 'अनुवाक्याम्' अनुब्रूते । एतावता कथं साम्यप्रतीतिरित्यत आह–वाग्घीति । " अनुष्टुप् च वै सप्तदशश्च समवर्ताऽम् सानुष्टुप् यानुक्तराणि छन्दांस्यसृजत "–इति सामब्राह्मणे ( १ प्र. २ ख. ) श्रवणादनुष्टुभो वाग्रूपत्वम् । ततोऽपि किमित्यत आह–वाग्घि प्रजापतिरिति । " आग्रायणास्तु श्रौषडित्यादि "–" एष वै सप्तदशः प्रजापतिरिति " श्रुतेः–( तै. स. १ । ६ । ११ )–प्रजापतिरूपत्वम् ॥ २७ ॥

सिद्धवद् व्यवहृतमुपांशुयाजमिदानीं सार्थवादं विदधाति–एतेन वै देवा इति । 'एतेन' उपांशुयाजेन, 'असुराणां' मध्ये 'य–यम्' असुरं हन्तुमैच्छन्, 'तं–तम्' उपत्सार्य उप पार्श्वे च गत्वा, उद्यम्यमानेन वषट्काराख्येन च 'वज्रेण' 'अघ्नन्' । वषट्कारस्य वृत्रशिरश्छेदनसाधनत्वाद्वज्रत्वम् । तथो एवेत्यादि स्पष्टम् । तस्माद्–उपांशुयाजं यजेदिति विधिः । उपांशु इज्यते देवता अत्र यागे इति 'उपांशुयाजः' ॥ २८ ॥

आज्यभागोपांशुयाजयोर्जामितापरिहाराय याज्यापुरोऽनुवाक्ययोर्वैलक्षण्यमुक्तम्, तदेव विधाय प्रशंसति–स वा ऋचमनूच्य जुषाणेनेत्यादिना । उदाहृतौ जुषाणशब्दयुक्तौ मन्त्रौ, 'तत्' तादृगनुष्ठानम् 'अनु' तत्सामर्थ्यादित्यर्थः । 'अन्यतरतः' तयोरन्यत्र ऋक्करणादेतत् कर्म 'अन्यतरतः' 'अस्थि' अस्थिवद् दृढं करोति । तस्मादन्यतरत ऋक्करणं युक्तमित्यर्थः ॥ २९ ॥

अथर्चमनूच्यर्चेति । एतत् 'ऋचमनूच्य ऋचा'–इत्येतद् व्याख्येयम् । 'उभयतोदन्ताः' पुरुषाश्वादयः

१–'उपत्सर्य' 'उपसार्य'–इति कः पाठो लभ्यते । सायणभाष्यसमत्या तु 'उपोत्सार्य'–इति पाठो युक्तः प्रतीयते । अथवा–उपोत्सृष्टे वैदिकप्रयोगे 'सृ'–धातुः स्यात् । तस्य सर्वाविशिष्टिविवादो तद्वदनुयोगस्य दृष्टत्वात् ॥

ऽइमा द्वय्यः प्रजा ऽअन्यतरतोदन्ताश्चैवोभयतोदन्ताश्च स यो हैवं विद्वा-
नग्नीषोमयोः प्रजातिं यजति बहुर्हैव प्रजया पशुभिर्भवति ॥ ३० ॥

स वै पौर्णमासेनोपवत्स्यन् । न सन्ना सुहित ऽइव स्यात्तेनेदमुदरमसुर्यं
क्लिनात्याहुतिभिः प्रातर्हैवमेष ऽउ पौर्णमासस्योपचारः ॥ ३१ ॥

स वै सम्प्रत्येवोपवसेत् । ( त्त ) सम्प्रति वृत्रꣳहनानि सम्प्रति द्विषन्तं
भ्रातृव्यꣳहनानीति ॥ ३२ ॥

स वा ऽउत्तरामेवोपवसेत् । ( त्तु ) समिव वा ऽएष क्रमते यः सम्प्रत्युप-
वसत्यनद्धा वै संक्रान्तयोर्यतरो वेतरमभिभवतीतरो वेतरमथ य ऽउत्तरा-
मुपवसति यथा पराश्चमावृत्तꣳसम्पिष्ꣳयात्प्रत्यालभमानꣳसोऽन्यतो-
घात्येव स्यादेवं तद्य ऽउत्तरामुपवसति ॥ ३३ ॥

हि दन्ताः—उभयतो ह्येतदस्य करोति । एता वा इमा द्वय्यः प्रजाः—अन्यतरतोदन्ताश्चैवोभयतो-
दन्ताश्च । स यो हैव विद्वानग्नीषोमयोः प्रजातिं यजति—बहुर्हैव प्रजया पशुभिर्भवति ॥ ३० ॥

पूर्णमासोपचारः ।

स वै पौर्णमासेनोपवत्स्यन्न सन्ना सुहित इव स्यात्—तेनेदमुदरमसुर्यं क्लिनात्याहुतिभिः प्रातर्हैवम् ।
एष उ पौर्णमासस्योपचारः ॥ ३१ ॥

स वै संप्रत्येवोपवसेत्—सम्प्रति वृत्रं हनानि, सम्प्रति द्विषन्तं भ्रातृव्यं हनानीति ॥ ३२ ॥

स वा उत्तरामेवोपवसेत् । समिव वा एष क्रमते—यः सम्प्रत्युपवसति, अनद्धा वै संक्रान्तयोर्यतरो-
वेतरमभिभवति, इतरो वेतरम् । अथ य उत्तरामुपवसति—यथा पराश्चमावृत्त संपिष्यात्प्रत्या-
लभमानम्—सोऽन्यतोघात्येव स्यात्, एवं तद्,—य उत्तरामुपवसति ॥ ३३ ॥

प्रनिद्वा । द्विविधप्रजात्यतिरिक्त प्रजान्तराभावात् सर्वप्रजालाभाय याज्यानुवाक्यायुगलयोरुक्त वैलक्षण्यम् ।
उक्तार्थज्ञानपूर्वकानुष्ठान प्रशंसति—स य इति । अग्नीषोमयो प्रजातिर्भूयसोमादिरूप विविधैश्वर्य, तदाति
कारणम् समागोऽनुयाज्याग्नीषोमयपुरोडाशाभ्यां वर्णनमनुतिष्ठत्यर्थ ॥ ३०—३२ ॥

पक्षान्तरमाह—स वा उत्तरामिति । न पूर्वां पौर्णमासीमनुवर्तेत् ' उत्तरामेव ' । उत्तरोत्तरामश्वे
गुणमाह—अथ य उत्तरामिति । यथा कश्चिन्दरात् प्राप्य अभिमुख पलायमान हननोद्योगरहित सम्यक्
चूर्णित करोति, तद्वत् पौर्णमास्येव भवति, अभिनिहत्योत्तरस्याम्यामन्तिनायनत्वात् । ' य उत्तराम् ' इति
पुनरुपसंहार ॥ ३३ ॥

१—" पूर्वां पौर्णमासीमुत्तरां वोपवसेत् " का० श्रौ० सू० २ । १ । १ । इति । २—पश्चान्तरमाहान्यथेत्यर्थान्तो ग्रन्थ नास्ति क्वचित् । ३—' तदुत्तरां पौर्णमासीम् ' इत्यादि पा० ।

स वै सम्वत्सरमेवोपवसेत् । ( अ ) यथा वा ऽअन्यस्य व्रतं सम्पिब्यादेवं तद्य ऽउत्तरामुपवसति सोऽन्यस्यैव कृतानुकरोऽन्यस्योपावसायी भवति तस्मात् सम्वत्सरमेवोपवसेत् ॥ ३४ ॥

( इ ) प्रजापतेर्ह वै प्रजाः ससृजानस्य । पर्वाणि विसस्रंसुः स वै संवत्सर ऽएव प्रजापतिस्तस्यैतानि पर्वाण्यहोरात्रयोः सन्धी पौर्णमासी चामावास्या चर्तुमुखानि ॥ ३५ ॥

स विस्रस्तैः पर्वभिः । (उ) न शशाक सꣳहातुं तमेतैर्हविर्यज्ञैर्देवा ऽअभिषज्यन्नग्निहोत्रेणैवाहोरात्रयोः सन्धी तत्पर्वाभिषज्यंस्तत्समदधुः पौर्णमासेन चैवामावास्येन च पौर्णमासीं चामावास्यां च तत्पर्वाभिषज्यंस्तत्समदधुश्चातुर्मास्यैरेवर्तुमुखानि तत्पर्वाभिषज्यंस्तत्समदधुः ॥ ३६ ॥

---

स वै संवत्सरमेवोपवसेत् । यथा वा अन्यस्य व्रतं संपिब्यात् एवं तद्—य उत्तरामुपवसति । सोऽन्यस्यैव कृतानुकरः, अन्यस्योपावसायी भवति; तस्मात् संवत्सरमेवोपवसेत् ॥ ३४ ॥

प्रजापतेर्ह वै प्रजाः ससृजानस्य पर्वाणि विसस्रंसुः । स वै संवत्सर एव प्रजापतिः, तस्यैतानि पर्वाणि—अहोरात्रयोः सन्धी, पौर्णमासी च अमावास्या च ऋतुमुखानि ॥ ३५ ॥

स विस्रस्तैः पर्वभिर्न शशाक संहातुम्, तमेतैर्हविर्यज्ञैर्देवा अभिषज्यन्—अग्निहोत्रेणैवाहोरात्रयोः सन्धी, तत्पर्वाभिषज्यन्—तत्समदधुः । पौर्णमासेन चैवामावास्येन च पौर्णमासीं च अमावास्यां च, तत्पर्वाभिषज्यन्—तत् समदधुः । चातुर्मास्यैरेवर्तुमुखानि तत्पर्वाभिषज्यन्—तत् समदधुः ॥ ३६ ॥

---

इत्थं पक्षान्तरं सोपपत्तिकमभिधाय प्रथम पक्ष सिद्धान्तयितुं पुनरप्याह—स वै संवत्सरमेवोपवसेदिति । ननु द्वितीयपक्षानादरे किं कारणमिति तत्राह—यथा वा अन्यस्येति । ' यथा ' कश्चिन्मन्दोऽन्येन पूर्वमेव पानितम्, पुनः स्वयम् ' पिब्यात् ', ' एवं ' ' तद् ' उत्तरोपवासे भवति । यत एव प्रतिनिहितस्य पक्षस्य संनाक्रान्तत्वात् । उत्तरानादरे कारणान्तरमाह—सोऽन्यस्यैवेति । किञ्च उत्तरोपवासी ' अन्यस्य ' अन्येन कृतं कार्यं तस्य ' अनुकरः ' अनुकारी—कृतस्यैव कार्यस्य पुनः करणशीलो भवति । तथा ' अन्यस्य उपावसायी ' अन्येनाध्यवसितस्य पुनरध्यवसायी ' भवति ' । सम्यगुपवसन्तं दृष्ट्वा, तदनुकर्तुं व्यवसति परेणुरसावुपवसतीत्येवं प्रतिभानात् । ' तस्मात् ' भवति—इति व्यवस्थितिमननम् ॥ ३४ ॥

सम्प्रति—पक्षमेव सिद्धान्तयितुमाख्यायिकामाह—प्रजापतेर्हेति । पुरा ' प्रजाः ' सृष्टवतः ' प्रजापतेः ' सन्धयो विस्रस्ता आसन् किल । ननु कः प्रजापतिः ? कानि पर्वाणि ? इति, उच्यते—संवत्सरः सकलप्रजोत्पत्तेः ' स संवत्सर एव प्रजापतिः, ' ' तस्य ' कालात्मकस्य ' पर्वाणि ' ' अहोरात्रयो. सन्धी ' प्रातस्सायङ्कालौ तथा एतौ ' सन्धी ' ' पौर्णमासी च अमावास्या च ' कालौ । ' ऋतुमुखानि ' वसन्तादीनि, तानि विस्रस्तानि ॥ ३५ ॥

स विस्रस्तैरिति । ' सः ' विस्रस्तानां ' संहातुं ' सन्धातुं शक्तो नाभूत् । ' तम् ' प्रजापतिं ' एतै-

स सᳫं हितैः पर्वभिः । ( रि ) इदमन्नाद्यमभ्युत्तस्थौ यदिदं प्रजापतेरन्नाद्यᳫं स यो हैवं विद्वान्त्सम्प्रत्युपवसति सम्प्रति हैव प्रजापतेः पर्व भिषज्यत्यवति हैनं प्रजापतिः स ऽएवमेवान्नादो भवति य ऽएवं विद्वान्त्सम्प्रत्युपवसति तस्मादु सम्प्रत्येवोपवसेत् ॥ ३७ ॥

( जु ) चक्षुषी ह वा ऽएते यज्ञस्य यदाज्यभागौ । तस्मात्पुरस्ताज्जुहोति पुरस्ताद्धीमे चक्षुषी तत्पुरस्तादेवैतच्चक्षुषी दधाति तस्मादिमे पुरस्ताच्चक्षुषी ॥ ३८ ॥

---

स संहितैः पर्वभिरिदमन्नाद्यमभ्युत्तस्थौ—यदिदं प्रजापतेरन्नाद्यम् । स यो हैवं—विद्वान् सम्प्रत्युपवसति—सम्प्रति हैव प्रजापतेः पर्व भिषज्यति, अवति हैनं प्रजापतिः, स एवमेवान्नादो भवति—य एवं विद्वान् सम्प्रत्युपवसति । तस्मादु सम्प्रत्येवोपवसेत् ॥ ३७ ॥

चक्षुषी ह वा एते यज्ञस्य—यदाज्यभागौ तस्मात्पुरस्ताद् जुहोति । पुरस्ताद्धीमे चक्षुषी तत्पुरस्तादेवैतच्चक्षुषी दधाति—तस्मादिमे पुरस्ताच्चक्षुषी ॥ ३८ ॥

---

हविर्यज्ञैः ' देवाः ' ' अभिषज्यन् ' भेषजमकुर्वन् । सोमव्यतिरिक्ताग्न्युपुरोडाशादिसाध्या ' हविर्यज्ञाः ' । विभज्य योजयति—सायं प्रातश्च—क्रियमाणेनाग्निहोत्रेण ' अहोरात्रयोः ' ' सन्धी ' एतदात्मकं प्रजापतेः ' तत् पर्व ' अचिकित्सन्, ' समदधुः ' समाहितमकुर्वन् । तथा ' पौर्णमासी चामावास्या च ' पौर्णमास्यमावास्याख्ये पर्वणी । वैश्वदेवादि—चातुर्मास्यैरेव वसन्ताद्यृतुमुखानि ' समदधुः ' ॥ ३६ ॥

स सᳫं हितैरिति । ' स ' एव कालात्मकः प्रजापतिः दृढपर्वा संवत्सरमध्ये यदन्नं व्रीह्यादिरूपं पाकं भवति—तत् सर्वमभिलक्ष्य भोक्तुमुत्थितवान् । कालावयवानां विच्छेदाभावात् तत्तत्कालोचितमन्नं भोगयोग्यमासीदित्यर्थः ।

इदानीमुपवासप्रयोग्यं पर्व विधत्ते—सम्प्रतीति । ' सम्प्रति ' ' हैव ' पर्वविस्रंसनसमकाल एव ' प्रजापतेः पर्व ' सम्प्रति उपवसन् चिकित्सितवान् भवति । तथैव सम्प्रत्युपवासिनं रक्षति, प्रजापतिवत् स्वयमपि सर्वान्नादो भवति ' य एव विद्वान् '—इत्युपसंहारः । तस्मादिति स्वाभिमतपक्षनिगमनम् । कात्यायनस्तु ब्राह्मणे सोपपत्तिकाभिधानमभिप्रेत्य पक्षद्वयमपि विकल्पेनोवाच—" पूर्वां पौर्णमासीमुपवसेत्, उत्तरां वा "—( का. श्रौ. सू. २. १ ) इति ॥ ३७ ॥

आज्यभागस्थाननियममाह—चक्षुषी ह वा इति । ' यत् ' यत ' आज्यभागौ ' चक्षुःस्थानीयौ—अतः ' पुरस्तात् ' कर्तव्यौ, तयोः पुरस्तात्करणेन ' यज्ञस्य चक्षुषी ' ' पुरस्तात् ' कृतवान् भवति । यतो यज्ञे ते ' पुरस्तात् ' स्थिते, अत इदानीमपि प्राणिनां ' चक्षुषी ' पुरस्ताद् वर्तेते ॥ ३८ ॥

---

१–' सोमव्यतिरिक्तपुरोडाशादि ' इत्येव क्वचित् । २–' यदन्नं दृढपर्वा संवत्सरमध्ये ' इत्यादि क. प.।

उत्तरार्द्धपूर्वार्द्धे हैके (क८) आग्नेयमाज्यभागं जुह्वति दक्षिणार्द्धपूर्वार्द्धे सौम्यमाज्यभागमेतत्पुरस्ताच्चक्षुषी दध्म ऽइतिवदन्तस्तदु तद्वाविज्ञान्यमिव हवींषि ह वा ऽआत्मा यज्ञस्य स यदेव पुरस्ताद्धविषां जुहोति तत्पुरस्ताच्चक्षुषी दधाति यत्रो ऽएव समिद्धतमं मन्येत तद्वाहुती-र्जुहुयात्समिद्धहोमेन ह्येव समृद्धा ऽआहुतयः ॥ ३९ ॥

स वा ऽऋचमनूच्य जुषाणेन यजति । तस्मादिमे ऽअस्थन्त्सत्यनस्थिके चक्षुषी ऽआश्लिष्टे ऽअथ यदृचमनूच्यर्चा यजेदस्थि हैव कुर्यान्न चक्षुः ॥ ४० ॥

(ए)ते वा ऽएते । अग्नीषोमयोरेव रूपमन्वायत्ते यच्छुक्लं तदाग्नेयं

---

उत्तरार्द्धपूर्वार्द्धे हैके आग्नेयमाज्यभागं जुह्वति, दक्षिणार्द्धपूर्वार्द्धे सौम्यमाज्यभागम्—एतत्पुरस्ताच्चक्षुषी दध्मः—इति वदन्तः । तदु तद्वा अविज्ञान्यमिव । हवींषि ह वा आत्मा यज्ञस्य । स यदेव पुरस्ताद्धविषां जुहोति—तत्पुरस्ताच्चक्षुषी दधाति । यत्रो एव समिद्धतमं मन्येत तद्वाहुतीर्जुहुयात् । समिद्धहोमेन ह्येव समृद्धा आहुतयः ॥ ३९ ॥

स वा ऋचमनूच्य जुषाणेन यजति । तस्मादिमे अस्थन् सत्यनस्थिके चक्षुषी आश्लिष्टे । अथ यदृचमनूच्यर्चा यजेद्—अस्थि हैव कुर्याद् न चक्षुः ॥ ४० ॥

ते वा एते अग्नीषोमयोरेव रूपमन्वायत्ते । यत् शुक्लम्—तद् आग्नेयम्, यत् कृष्णं तत् सौम्यम् ।

---

अत्र केषाञ्चित् पक्षमाह—उत्तरार्द्धपूर्वार्द्धे इति । तेषामभिप्रायमाह—एतदिति । 'एतत्' एतेन—पूर्वभागेऽप्युत्तरदक्षिणभागयोर्होमेन 'पुरस्तात्' साक्षात् 'चक्षुषी' स्थान एव स्थापयाम इति । अस्य पक्षस्य दुरवगमत्वमाशङ्क्य पूर्वोक्तमेव पक्षं सिद्धान्तयति—तदु तद्वेत्यादिना । 'अविज्ञान्यमिव' विज्ञानेन हीनमिव, वैषम्याभावेन साक्षात् स्थानविज्ञानस्याशक्यत्वात् । तस्य कस्य पुरस्तादित्यत आह—हवींषीति । यागशरीररूपस्य द्रव्यस्यागात्मकत्वाद् यत्र प्रधानानि हवींषि हूयन्ते,—तेषां पुरोभागमात्रहवनात् स्वस्थाने चक्षुःस्थाने भवतीत्यर्थः । उक्तपुरोभागविशेषमाह—यत्रो एवेति । उत्तरपूर्वार्द्धादिस्थानमनपेक्ष्य प्रधानहविः पुरोभागे, यत्रकुत्राग्नौ समिद्धे होतव्यम्; तथा सति 'आहुतयः' अपि 'समृद्धाः' स्युः । अत्र कात्यायनः—"आग्नेयमुत्तरपूर्वार्द्धे, दक्षिणपूर्वार्द्धे सौम्यम्, समिद्धतमे वा"—इति ( श्रौ. सू. ३।३।१७।२०।२१।२२ ) ॥ ३९ ॥

आज्यभागयाज्यानुवाक्ययोर्याज्या जुषाणवेत्युक्थ्य पूर्वमुक्तम्, तदपि तयोश्चक्षुष्ट्वप्रयुक्तमित्याह—स वा ऋचमनूच्येति । 'अस्थन्' अस्थनि,—मुखेऽस्थिमये सति ऋग्यजुषयोः काठिन्यमृदुत्वात् साम्यादस्थ्यनस्थ्यात्मना । यद्वै यज्ञस्य समाम्नातेन यजुषा क्रियते, तत् शिथिलितमः यदृचा तद् दृढमिति । 'ऋचा' "अग्निर्वृत्राणि"—इत्यादिकया; 'यजुषा' "जुषाणो अग्निराज्यस्य. सोम."—इति, ऋग्यजुषोश्च मृदुशिथिलत्वे समाम्नाते । उक्तप्रकारतामेयान्यभावे दोषदर्शनेन समर्थयते—यदृचमनूच्येति । अपृचाचेत् कुर्वन् प्राणिना यज्ञस्य वा 'अस्थि' अस्थिस्थान मुख केवल 'कुर्यात्,' 'न चक्षुः' चक्षुस्तु वर्जयत्येव ॥ ४० ॥

आग्नेयसौम्ययोराज्यभागयोर्यच्चक्षुष्ट्व लौकिकचक्षुस्साम्येन समर्थयते—ते वा एते इति । 'ते' चक्षुषी

---

१—'ऋग्यजुषयोः' 'ऋग्यजुषोः' इति च क्वचित्पाठः । २—अन्यथान्यभावे—इ. पा. ।

यत्कृष्णं तत्सौम्यं यदि वेतरथा यदेव कृष्णं तदाग्नेयं यच्छुक्लं तत्सौम्यं यदेव वीक्षते तदाग्नेयꣳ रूपꣳ शुष्के ऽइव हि वीक्षमाणस्याक्षिणी भवतः शुष्कमिव ह्याग्नेयं यदेव स्वपिति तत्सौम्यꣳ रूपमार्द्रे इव हि सुषुपुषोऽक्षिणी भवत ऽआर्द्र ऽइव हि सोम आजरसꣳ ह वाऽस्मिँल्लोके चक्षुष्मान्भवति सचक्षुरमुष्मिँल्लोके सम्भवति य ऽएवमेतौ चक्षुषी ऽआज्यभागौ वेद ॥ ४१ ॥ २ ॥

इति पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् [ ६ । ३ ] ॥

इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । सोऽबलीयान्मन्यमानो नास्तृषीतीव बिभ्यन्निलयाञ्चक्रे स पराः परावतो जगाम देवा ह वै विदाञ्चक्रुर्हतो वै वृत्रोऽथेन्द्रो न्यलेष्टेति ॥ १ ॥

---

यदि वेतरथा—यदेव कृष्णं तदाग्नेयम्, यत् शुक्लं तत् सौम्यम् । यदेव वीक्षते तदाग्नेयं रूपम्—शुष्के इव हि वीक्षमाणस्याक्षिणी भवतः, शुष्कमिव ह्याग्नेयम् । यदेव स्वपिति तत्सौम्यं रूपम्—आर्द्रे इव हि सुषुपुषोऽक्षिणी भवतः, आर्द्र इव हि सोमः । आ जरसं ह वा अस्मिन् लोके चक्षुष्मान् भवति, सचक्षुरमुष्मिन् लोके संभवति—य एवमेतौ चक्षुषी आज्यभागौ वेद ॥ ४१ ॥

दर्शोपचारः ।

इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । सोऽबलीयान् मन्यमानो नास्तृषीतीव बिभ्यन्निलयाञ्चक्रे । स पराः परावतो जगाम । देवा ह वै विदाञ्चक्रुः—हतो वै वृत्रः—अथेन्द्रो न्यलेष्टेति ॥ १ ॥

---

प्रत्येकम् 'अग्नीषोमयो रूपम्' 'अन्वायत्ते' अनुगामे । कथम् ? चक्षुषि 'यच्छुक्लं तदाग्नेयम्' सितभास्वरत्वसाम्यात्, चन्द्रमसि कार्ष्ण्यस्य दृष्टयनुसारेण स्फुटं प्रतिभानात् 'यत्कृष्णं तत् सौम्यम्' । अथ "आग्नेयं कृष्णग्रीवम्"—( य० वा० स० २९. २८. ) इत्यादिषु कार्ष्ण्यस्याग्नेयत्वश्रवणादग्निसम्बन्धे प्रकाशकाभिधर्मवाच सोमे भूयसः शैत्यस्य दर्शनाच—उक्तवैपरीत्यमाशङ्क्याह—यदि वेतरथेति । इदानीं दर्शनादर्शनाभेदेनाग्नीषोमरूपतामाह—यदेव वीक्षत इति । 'यदेव' चक्षुरुन्मीलनकाले सर्वं पश्यति । एतदुपपादयति—शुष्के इवेति । सर्वमपि वस्त्वग्निसम्बन्धे शुष्कं भवतीति प्रसिद्धम् । स्वपितिरप्यदर्शनमुपलक्षयति—यदेवेति । दर्शनं न करोतीत्यर्थः, 'सुषुपुषः' सुप्तवत—स्वपेः क्वसु ( पा० सू० ३ । २ । १०७, ६ । १ । १९ ) सोमोऽप्यार्द्रप्रभव आप्यमण्डलत्वात् । वेदितुः प्रशंसा—आ—जरसमिति । वयोहानिपर्यन्तं 'चक्षुष्मान् भवति' इत्यर्थः । 'अमुष्मिन्' स्वर्गलोकेऽपि 'सचक्षुः' एव 'सम्भवति' । आज्यभागयोश्चक्षुष्ट्ववेदिता ॥ ४१ ॥ २ ॥ [ ६. ३ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये

प्रथमकाण्डे षष्ठाध्याये तृतीयं ब्राह्मणम् ॥

अथामावास्यानि हवींषि विधातुमाख्यायिकामाह—इन्द्रो ह यत्रेति । 'यत्र' यस्मिन् देशे 'इन्द्रः'

तमन्वेष्टुं दध्रिरे । (रेऽग्नि) अग्निर्देवतानाᳪं हिरण्यस्तूप ऽऋषीणां बृहती छन्दसां तमग्निरनुविवेद तेनैता ᳪं रात्रिᳪं सहाजगाम स वै देवानां वसुर्वीरो ह्येषाम् ॥ २ ॥

ते देवा ऽअब्रुवन् । ( ब्र ) अमा वै नोऽद्य वसुर्वसति यो नः प्रावात्सी-दिति ताभ्यामेतद्यथा ज्ञातिभ्यां वा सखिभ्यां वा सहागताभ्याᳪं समान-मोदनं पचेद्दुं वा तदह मानुषᳪं हविर्देवानामेवमाभ्यामेतत्समानᳪं हविर्निरवपन्नैन्द्राग्नं द्वादशकपालं पुरोडाशं तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति ॥ ३ ॥

---

तमन्वेष्टुं दध्रिरे—अग्निर्देवतानां, हिरण्यस्तूप ऋषीणां, बृहती छन्दसाम् । तमग्निरनु विवेद । तेनैतां रात्रिं सहाजगाम । स वै देवानां वसुः, वीरो ह्येषाम् ॥ २ ॥

ते देवा अब्रुवन्—अमा वै नोऽद्य वसुर्वसति, यो नः प्रावात्सीदिति । ताभ्यामेतद्—यथा ज्ञातिभ्यां वा सखिभ्यां वा सहागताभ्यां समानमोदनं पचेद्दुं वा । तदह मानुषं हविः । देवानामेवमाभ्या-मेतत् समानं हविर्निरवपन्—ऐन्द्राग्नं द्वादशकपालं पुरोडाशम् । तस्मादैन्द्राग्नो द्वादशकपालः पुरो-डाशो भवति ॥ ३ ॥

---

'घ्नन्' वृत्रवधार्थम् 'वज्रम्' 'प्रजहार' तदा स्वत बलवान् भवति 'अवर्धीत्' महानिति मत्वा 'नात्मृषे' । "मृष हिंसायाम्" ("सृमानि इत्यस्य वधकर्मसु पाठात्" निरु० २ । ११ । १२) लुङ् (पा. सू. ३ । २ । ११० ॥ ३ । ४ । ६ ।) अह न हिंसितवतर्न्दिति भीतः सन् पुनर्वधशङ्कया निर्लीनोऽभूत् । एतदेवाह—'परः परावतो जगाम' अन्यन्त विप्रकृष्टदेशं गतवान् । परावदिति दूरनाम (निघण्टु ३ । २६ । ६ । निरु. ७ । ७ । ४ ॥ ११ । ४ । ३४) । तस्य "उपसर्गाच्छन्दसि धात्वर्थे" (पा० सू० ५. १. ११८.) इति मतुप् । ततो 'देवाः' वृत्रे हते 'इन्द्रः' तद्वधजनितशङ्कया कुत्र निर्लीनः 'इति' विदित्वा, अन्वेषणे मतिं कृत्वा देवर्ष्यभिच्छन्दसां मध्ये अग्निहिरण्यस्तूपबृहत्याख्यानन्वेषणस्यार्थमैषिषुः । तत्र 'अग्निः' 'अनुविवेद' अनुसृत्य लब्धवान् । इन्द्रेणैव सह 'एताम्' रात्रिम् । रात्रिशब्दो दिन-स्योपलक्षणः । अनन्तसंयोगे द्वितीया । इत्यमन्वेषणसाधनत्वात्तेषां सहागतवान् । किं कारणं तत्र तस्य वसु इति, तदाह—सो वा इति । 'सः' इन्द्रो 'देवानाम्' 'वसुः' धनभूतः, (पा० निरु० ६ । २ । ४) वसतिवा वा (पा० निरु० १२ । ४ । ७) एव 'हि' यतः 'एषाम्' देवानां मध्ये 'वीरः,' अन्यस्य-दमननिमित्तवीर्यो युक्तः । "इन्द्रो हि देवानां वसु"—इति तैत्तिरीयके समान-प्रकरणेऽभिधानात् "स वै"—इति तच्छब्देनेन्द्र एव परामृश्यः ॥ १ ॥ २ ॥

ऐन्द्राग्नं द्वादशकपालं विधातुमाह—ते देवा इति । 'ते देवाः' 'नः' अस्माकं सम्बन्धी 'यः' इन्द्रः प्रवासनमकरोत्, सः 'नः' 'वसुः' 'अद्य' 'अमा' अग्निना सह 'वसति'—'इति' उक्त्वा, 'ताभ्याम्' सन्निधानेन सह वसद्भ्यामिन्द्राग्निभ्याम्, द्वादशकपाले हविर्दिति शेषः प्रत्यक्षान इत्यर्थः ।

---

१-एतस्मै-(स १ ॥तमन्वेष्टुमिति ।) इति क्वचित् पुस्तकेऽधिकमुपलभ्यते । २-निरुक्तम् १२. ४. ७ द्रष्टव्यम् ।
३-"कव्यध्वरेपृतनस्यर्चि" इति पा. सू. २ । ३ । ६९ ॥

स इन्द्रोऽब्रवीत् । (यु) यत्र वै वृत्राय वज्रं प्राहरं तद्व्यस्मये स कृश ऽइवास्मि न वै मेदं धिनोति सन्मा धिनवत्तन्मे कुरुतेति तथेति देवा अब्रुवन् ॥ ४ ॥

( वँस्ते ) ते देवा ऽअब्रुवन् । ( न्न ) न वा ऽइममन्यत्सोमाद्धिनुयात्सोममेवास्मै सम्भरामेति तस्मै सोमꣳसमभरन्नेष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष ऽएताꣳरात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागच्छति स ऽइहैवापश्चौषधीश्च प्रविशति स वै देवानां वस्वन्नꣳह्येषां तद्यदेष ऽएताꣳरात्रिमिहामा वसति तस्मादमावास्या नाम ॥ ५ ॥

---

स इन्द्रोऽब्रवीत् । यत्र वै वृत्राय वज्रं प्राहरं, तद् व्यस्मये । स कृश इवास्मि । न वै मेदं धिनोति । यन्मा धिनवत् तन्मे कुरुतेति । तथेति देवा अब्रुवन् ॥ ४ ॥

ते देवा अब्रुवन् । न वा इममन्यत् सोमाद्धिनुयात् । सोममेवास्मै संभरामेति । तस्मै सोमं समभरन् । एष वै सोमो राजा देवानामन्नं—यच्चन्द्रमाः । स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्ददृशे, तदिमं लोकमागच्छति । स इहैवापश्चौषधीश्च प्रविशति । स वै देवानां वसु, अन्नं ह्येषाम् । तद् यदेष एतां रात्रिमिहामा वसति—तस्मादमावास्या नाम ॥ ५ ॥

---

ननु देवताभेदेन हविर्भेदः किं न स्यात् ? इत्यत आह—यथा ज्ञातिभ्यामिति । परस्परमुच्छिष्टता नाम्नी-स्वर्गमर्थिनु ज्ञातिसत्योरुन्यास । ' समानम् ' एकमेव पचति पक्त्वा समानं प्रयच्छतीत्यर्थः । ' मानुषम् ' मनुष्येभ्य पर्याप्तं सत्, उपकरणमिति शेष । अस्त्वेव देवानां किमायातमित्याह—हविर्देवानामिति । ' देवाना ' तु सहागतानां ' हवि समानमेव ' उपकरणमित्यर्थ । एवं पूर्वाचारानुसारेणैव इदानीं विधत्ते—तस्मादैन्द्राग्न इति ॥ ३ ॥

अथ सान्नाय्य विधातुमाह—स इन्द्र इत्यादिना । ' यत्र ' यस्मिन्काले ' वज्रम् ' ' प्राहरम् ' प्राक्षिपम्, ' तत् ' तदा ' व्यस्मये ' विस्मितोऽभवम्, विगतप्राणके स्मयदर्शनात् । यत ' कृशोऽस्मि ' तस्मात् ' इद ' कठिन पुरोडाशम् ' मा ' मा ' न धिनोति ' न प्रीणयति अतो मम प्रीतिकर हवि सम्पादयत ' इति ' ॥४॥

ते देवा इति । उक्ता ' देवा ' ' इमम् ' इन्द्र प्रीणयितुं ' सोमादन्यत् ' ' न ' शक्नोतीति विचार्य, तस्मै ' सोममेव ' सम्भृतवन्त । कथ सम्भरेयुरिति तदनन्तर उच्यते—चन्द्रमा इति । ' यत् ' योऽस्ति ' एष ' एवाभिधूयमाण ' सोमो राजा ' ' स ' एवोभयतश्चन्द्रदर्शनरहितायां सम्पूर्णामावास्यायां भूलोकमागत्याप्स्वोषधीषु च प्रविशति । ' स ' प्रविष्ट एव चन्द्रमा ' देवाना वसु ' देवधनम् । कुत ? यत ' एषाम ' व्रीहि-यवसोमादिरूपेण ' अन्नम् ' भवति, अतो वसुरित्यर्थ । चन्द्रमसोऽत्रोषधिसहवासप्रसङ्गात् ' अमावास्या '—शब्द निर्वक्ति—तद्यदेष इति । ' इह ' भूलोके ' एतां रात्रिम् ' अपरिदृष्टचन्द्रायां रात्रौ साकल्येन ' अमा वसति ' अमा सह वसति, अतोऽपधिचन्द्रमसामस्यां तिथौ सहवासात् सा तिथि ' अमावास्या नाम ' अभवत् ॥ ५ ॥

( ताथा ) अथावर्त्तते । सूर्यस्यावृतमन्वावर्त्त ऽइति तदेतां गतिमेतां प्रतिष्ठां गत्वैतस्यैवावृतमन्वावर्त्तते ॥ २० ॥

( तेऽथ ) अथ पुत्रस्य नाम गृह्णाति । ( ती ) इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवदिति यदि पुत्रो न स्यादप्यात्मन ऽएव नाम गृह्णीयात् ॥ २१ ॥

( इ ) अथाहवनीयमुपतिष्ठते । प्राङ्मे यज्ञोऽनुसन्तिष्ठाता ऽइति तूष्णीमुपतिष्ठते ॥ २२ ॥

---

अथावर्त्तते–" सूर्यस्यावृतमन्वावर्त्ते "–( वा० सं० २ । २७ ) इति । तदेतां गतिमेतां प्रतिष्ठां गत्वा–एतस्यैवावृतमन्वावर्त्तते ॥ २० ॥

अथ पुत्रस्य नाम गृह्णाति । इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवदिति । यदि पुत्रो न स्याद्–अथात्मन एव नाम गृह्णीयात् ॥ २१ ॥

अथाहवनीयमुपतिष्ठते ' प्राङ्मे यज्ञोऽनुसन्तिष्ठातै ' इति । तूष्णीमुपतिष्ठते ॥ २२ ॥

---

जीविनमाशासे–यत हिंसा यदि न सम्पत्स्यात्कर्म्भे अ[illegible]म् । इत्यर्हैते विशोति–एतद्युक्तमपि नाईदेव । तेनापि यदेस्य [illegible] यदा[illegible]नमता[illegible]पि पुत्रो आयते । तस्माद् [illegible] इति ॥ १९ ॥ ]

अथावर्त्तते । " सूर्यस्येत्यावर्तते प्रदक्षिणम् " इति ( का० श्रौ० सू० ३ । १७४ ) मन्त्रवर्णात् प्रादक्षिण्येन, सूर्यस्यावृतमन्विति मन्त्रे दृश्यते, सूर्यो हि प्रादक्षिण्येन गच्छति " गच्छति प्राङ्रविण्यामिति " इति ( का० श्रौ० सू० ३ । १७५ ) ' एतस्यैव ' सूर्यस्य ॥ २० ॥

[ अथावर्त्तते । सूर्यस्य वर्त्म[illegible]–तमन्वावर्त्तते । तदेतामेति । [illegible] । [illegible] मन्त्रवर्णामत[illegible] [illegible] गृह्णीयात् इति ॥ २० ॥ ]

अथ पुत्रस्य । " तनोऽसितन्नुरस्यनुमेत्यादि०–०पुत्रनाम गृह्णाति " इति ( का० श्रौ० सू० ३ । १७६ ) कथं पुनर्गृह्णाति ? " तनोऽसि तनुरसि "–इत्येतस्मिन् मन्त्रे " आत्मनोऽविद्यमाने तनेत्रे त्वा ज्योतिषे स्वेति वा " इति–( का० श्रौ० सू० ३ । १७७ ) तत्पदैकवाक्यभूत गृह्णाति । इत ? [illegible] । ' इदं मे कर्म, इदं वीर्यम्, पुत्रो देवदत्तोऽनुसन्तनवत् '–इति ; किमर्थं नाम गृह्णाति ? ' इदं मे ' ' वीर्यं ' विक्रमम्, ' पुत्र ' देवदत्तादि ' अयम् ' ' अनुसन्तनवत् ' अनुसन्तनोतु । कथम् ? ' मे ' मम ' इदं वीर्यमनुसन्तनवदिति ' मा विच्छिन्द्यादित्येवमर्थम् । पक्षान्तरमाह–' यदि पुत्रो न स्यात् " कथंचित् पुत्ररहितो भवेत्, अजातपुत्रो मृतपुत्रो वा तदा ' आत्मनो नाम गृह्णीयात् ' । तथा च ' इदं मे कर्मेदं वीरं देवदत्तोऽहं सन्तनवानि '–इति नामग्रहणम् ॥ २१ ॥

अथाहवनीयम् । " आहवनीयमुपतिष्ठते तूष्णीम् " इति ( का० श्रौ० सू० ३ । १७८ ) गार्हपत्योपस्थानादिकर्मणा यत्पदं न प्राप्नोति, अत उपस्थानयज्ञक्रिया प्रत्यक्तस्था जाता, सा च जघन्या, अधोगतित्वात्, अत आहवनीयोपस्थान क्रियते प्राक्संस्थित्यै । अपि च प्रत्यग्गमनशब्दो हि नरकपातवाचक, एवमधोगतिर्यज्ञस्य स्यात् । तूष्णीमिति । समर्थामन्त्रे प्राप्ते तूष्णीमुपस्थान विधीयते इति मन्त्रनिवृत्ति क्रियते ॥ २२ ॥

[ अथाहवनीयम् । [illegible] । तूष्णीं [illegible] इति ॥ २२ ॥ ]

---

१–" अनडुत् पुत्रं तव [illegible] पुत्रस्य नामाभिव्याहृत्य " इति साङ्खायन २।१७।११ " [illegible] पुत्रस्य नाम गृह्णाति " इत्यापस्तम्ब । ४ । १६ । ४ । २–" तूष्णीमिति [illegible] क्रियते, मन्त्राभावात् । एवं च तत्तनये [illegible] विलयाय [illegible] ' इति हि [illegible] ।

(तेऽय) अथ व्रतं विसृजते । (त) इदमहं य एवास्मि सोऽस्मीत्यमानुष इव वा ऽएतद्भवति यद्व्रतमुपैति न हि तदवकल्पते यद्ब्रूयादिदमहं सत्यादनृतमुपैमीति तदु खलु पुनर्मानुषो भवति तस्मादिदमहं य एवास्मि सोऽस्मीत्येवं व्रतं विसृजेत ॥ २३ ॥ ४ ॥

इति सप्तमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ४ ॥ कण्डिकासंख्या ११४ ॥
ब्राह्मणसंख्या ३७ एवं कण्डिकासंख्या ८३८ ॥

---

अथ व्रतं विसृजते—"इदमहं य एवास्मि सोऽस्मि"-(वा० सं० २।२८) इति अमानुष इव वा एतद्भवति—यद्व्रतमुपैति । न हि तदवकल्पते यद्ब्रूयाद्—इदमहं सत्यादनृतमुपैमि इति । तद् खलु पुनर्मानुषो भवति । तस्माद् 'इदमहं य एवास्मि सोऽस्मि' इत्येवं व्रतं विसृजेत ॥ २३ ॥

इति दर्शपूर्णमासेष्टिः सम्पूर्णा ॥

---

अथ व्रतम् । "व्रत विसृजते येनैनेयात्" इति—(का. श्रौ. सू. ३ । १०९) पूर्वोक्तामितिकर्तव्यतामनूद्य यज्ञसमाप्तिर्नंतविसर्गसम्बद्धा विधीयते, यदिदमुक्तं "सस्थिते" श. प. १ का. १ । १ । २ ।) इति, तदिदमवसरप्राप्तं व्रत विसृजते । स्वशाखायाम् "इदमहमनृतात् सत्यमुपैमि"—(श. प. १ का. १ । १ ।४) इति मन्त्रोच्चारेऽभिप्रेतः—अत एव पश्चान्तरन्यासो न कृतो भगवत्या श्रुत्या ॥

समाप्तोऽयं पौर्णमास., सर्वास्विष्टिषु पशुबन्धेषु यागेषु सौत्रामण्यां च प्रकृतिभूतः। यद्यप्ये कृताधानस्य भवति, तथापि आधानेष्टीनां तनूहविस्सम्बद्धानां पौर्णमासयाग. प्रकृतिः, तस्मात् पूर्वमुपदेश्यः । ननु तर्हि तनूहविषामेव सर्वेष्टिप्रकृतित्वं कृत्वा तान्येव पूर्वं कस्मान्नोपदिष्टानि ? सत्यम् ! किन्तु तेष्वितिकर्तव्यतावैकल्यदर्शनात् सर्वप्रकृतित्वं न सम्भवति, तस्मात्पौर्णमासयाग एव पूर्वमुपदिष्टः ॥ २३ ॥ ४ ॥

[अथ व्रतं । व्रतमिति कर्मणो नामधेयम् । तस्य विसर्गं कुरुते यजमान इदमहमिति । यद्व्रतं विसृजते, तेन मनोऽमानुष इव देव इव भवति । न हीति । मन्त्ररूपान्तर दूषणम् । व्रतविसर्गानन्तरं पुनः मानुषो जायते, तस्मादिदमहमित्यनेन मन्त्रेण व्रतं विसृजेतेति विधिः । तद् खल्विन्धनधारणार्थः । "यथाप्युकार एतस्मिन्नेवार्थ वर्तते" इति स्मरणात् (निरु १।२।४) खलुपद सन्निधानसिद्ध्यै । वै तस्यैव वरेण्येत्यादि विष्पर्यन् इति ॥ २३ ॥] ॥ इति परिशिष्टम् ॥

इत्याचार्यहरिस्वामिनः कृतौ शतपथभाष्ये नवमाध्याये तृतीयं ब्राह्मणम् ॥ ९ ॥ ३ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः । श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः । धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ शतपथभाष्ये नवमोऽध्यायः समाप्तः ॥ ९ ॥

इति सप्तमः प्रपाठकः समाप्तः ॥ ७ ॥

नूतनां विश्मार्कोण वल्मा कनकवेदिकाम् । दत्तामायास्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ १ ॥
इति श्रीसकलविद्यानिधानकवीन्द्राचार्यसरस्वतीनां शुक्लयजुर्वेदीये माध्यन्दिन-
शतपथब्राह्मणभाष्ये हविर्यज्ञं नाम प्रथमं काण्डं समाप्तम् ॥ १ ॥

इति श्रीशतपथब्राह्मणे सायणभाष्यसमेतं
प्रथमं काण्डम् ।

( तत्र ७ अ ४ ब्राह्मणादारभ्य हरिस्वामिन
एव भाष्यमुपलभ्यम् । )



श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम्



सायणभाष्यसमेतम् ।

तत्र

## द्वितीयं काण्डम् २ ।



॥ ओ३म् ॥

# एकपादिकानाम—द्वितीयकाण्डे प्रथमः प्रपाठकः ।

## प्रथमोऽध्यायः प्रारभ्यते ।

### तत्र प्रथमं ब्राह्मणम् ।

हरिः ओ३म् ॥ स वा इतश्चेतश्च सम्भरति । तत्सम्भाराणाᳪं सम्भारत्वं यत्रयत्राऽस्यैकं ततस्ततः सम्भरति तद्यशसैव तद्देवेनैनमेतत्समर्द्धयति पशुभिरिव तन्मिथुनेनेव तत्सम्भरन् ॥ १ ॥

---

अथाग्न्याधानम् ।

तत्र सम्भारप्रकरणम् ।

स यद्वा इतश्चेतश्च सम्भरति तत्—सम्भाराणां सम्भारत्वम् । यत्र—यत्राऽस्यैकं ततस्ततः सम्भरति । तद् यशसैव तद्—देवेनैनमेतद् समर्द्धयति । पशुभिरिव तद् । मिथुनेनेव तद्— सम्भरन् ॥ १ ॥

( न्र ) अथोद्लिखति । तद्यदेवास्यै पृथिव्या ऽअभिष्ठितं वाभिष्ठ्यूतं वा तदेवास्या ऽएतदुद्धन्त्यथ यज्ञियायामेव पृथिव्यामाधत्ते तस्माद्वा उद्लिखति ॥ २ ॥

( त्यु ) अथाद्भिरभ्युक्षति । ( त्ये ) एष वा अपाᳬ सम्भारो यदद्भिरभ्युक्षति तद्यदपः सम्भरत्यन्नं वा ऽआपोऽन्नᳬ हि वा ऽआपस्तस्माद्यदेमं लोकमाप आगच्छन्त्यथेहान्नाद्यं जायते तदन्नाद्येनैवैनमेतत्समर्द्धयति ॥ ३ ॥

---

अथोद्लिखति, तद्-यदेवास्यै पृथिव्या अभिष्ठितं वा, अभिष्ठ्यूतं वा । तदेवास्या एतदुद्धन्ति । अथ यज्ञियायामेव पृथिव्यामाधत्ते तस्माद्वा उद्लिखति ॥ २ ॥

अथाद्भिरभ्युक्षति । एष वा अपां सम्भारो यदद्भिरभ्युक्षति । तद् यद्-अपः सम्भरति-अन्नं वा आपः-अन्नं हि वा आपस्तस्माद् यदेमं लोकमाप आगच्छन्ति अथेहान्नाद्यं जायते । तदन्नाद्ये-नैवैनमेतत् समर्द्धयति ॥ ३ ॥

---

इति सम्भारा ' इति व्युत्पत्त्या तेषां ' सम्भार '-नाम सम्पन्नमित्यर्थः ।) इत्यग्नेत्यर्थेति । "निर्त्यवीप्सयोः "-(पा० सू० ८ । १ । ४ ) इति द्विर्वचनम् । एतच्च विशदयन् सम्भरणं निमित्तं-यत्र-यत्रेति । यस्मिन् यस्मिन् पदार्थे ' अग्ने ' सम्बन्धि तेजो ' न्यक्त ' निलीनं भवति, तस्मात् सर्वस्मादपि सम्भरणं कार्यमित्यर्थः । एतत् सम्भरणीयद्रव्यविशेषोपजीवनेन प्रशंसति-तद्यशमेवेति । सम्भरति पुरस्तात् सर्वदोषनशात् शून्यवान् त्रिष्वपि वाक्येषु स्वदित्यनन्तरं सम्बध्यते । त्यच्छब्दश्च एवशब्दपर्यायः "उत त्व पश्यन् " ( ऋ० सं० १० । ७१ । ७ ) इत्यादौ तथा दर्शनात् । " अप्येकः पश्यन् न पश्यति वाचम् " इति यास्कः । ( नि० १ । ६ । २ ) 'तत्' तत्र ' त्वेत् ' एकं हिरण्याहत्य वस्तु ' सम्भरन् ' ' एनम् ' अग्निमेनेन सम्भरणेन ' यशसैव समर्द्धयति ' । हिरण्यस्य यशोरूपत्वमग्रे ( श० प० २ । १ । १ । ५ ) वक्ष्यते । एवमुत्तरवाक्ययोरपि योजना । तत्र त्वदिति पदाभ्यामुपोदनद्रव्ये विवक्षिते । तयोश्च पशुमिथुनत्वं ऽपत्ये उपरिष्टात् ( श० प० २ । १ । १ । ४-६ ) समाम्नास्येते ॥ १ ॥

तस्य च हिरण्यादिसम्भारस्य निवपनमुद्लेखनाभ्युक्षणसहितेष्वेव गार्हपत्याद्यायतनेषु कार्यमिति यभिप्रेत्य प्रथम-मुल्लेखनं विधाय प्रशंसति-अथोद्लिखतीति । ' अस्यै पृथिव्यै ' इति षष्ठ्यर्थे चतुर्थी ( पा० सू० २ । ३ । ६१ ) । अस्या पृथिव्याः सम्बन्धि, यत् ' अभिष्ठितम् ' उपर्यवस्थानेन पादस्पर्शं प्रनिर्नेनम्, ' अभिष्ठ्यूतम्, तद्वृपरं निष्ठीवनादिजनितमेवेत्यर्थः । 'वा '-शब्दो चार्थः । यज्ञियायामिति । यज्ञार्हायामित्यर्थः ॥ २॥

उद्लिखितायतनानामभ्युक्षणं विधत्ते-अथेति । एतदभितः सर्वतो यदभ्युक्षणम्, ' एष वा अपां सम्भारः ' न तु हिरण्यादिवत् पृथगुपादाय तासां निवपनं कार्यमित्यर्थः । ' अन्नं वै ' इत्यादि निगदसिद्धम् ॥३॥

---

१-चैलकेति पा । २-' तदु ' इति पा । ३-यदि च भूतौ मिथुनत्वस्य विधानं, पशुत्वं तत्र नास्ति तथापि "अस्यानुरा" (श. प. २ । १ । १४ ) इति ब्राह्मणस्थवाक्यस्येह हेतुनिमित्तं पूर्वनिपातो ज्ञेयः । ४-एतदनन्तरम् " अथाध्वमि ते नेष्यतीत्याहुः पुष्कलादिवमेवेत्यवम् "-इत्यधिकमुपलभ्यते क पु । ५-" हन्त्रमुल्लिख्याभ्युक्ष्य न्यस्येत् हिरण्य सिकतो-षान्करशिकरवल्मीकवपाश्च " इति का. श्रौ. सू. ४ । २१० ॥

योषा वा ऽआपः । ( पो ) वृषाग्निर्मिथुनेनैवैनमेतत्प्रजननेन समर्द्धयत्य-
द्भिर्वा ऽइदᳪं सर्वमाप्तमद्भिरेवैनमेतदाप्त्वाधत्ते तस्मादपः सम्भरति ॥४॥
(त्यु) अथ हिरण्यᳪं सम्भरति । (त्य) अग्निर्ह वा ऽअपोऽभिदध्यौ मिथु-
न्याभिः स्यामिति ताः सम्बभूव तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवत्तस्मा-
देतदग्निसङ्काशमग्नेर्हि रेतस्तस्मादप्सु विन्दन्त्यप्सु हि प्रासिञ्चत्तस्मा-
देनेन न धावयति न किञ्चन करोत्यथ यशो देवरेतसᳪं हि तद्यशसैवैनमेत-
त्समर्द्धयति सरेतसमेव कृत्स्नमग्निमाधत्ते तस्माद्धिरण्यᳪं सम्भरति ॥५॥

---

योषा वा आपः, वृषाग्निः । मिथुनेनैवैनमेतत् प्रजननेन समर्द्धयति । अद्भिर्वा इदं सर्वमाप्तम् । अद्भिरेवैनमेतदाप्त्वाधत्ते—तस्मादपः सम्भरति ॥ ४ ॥

अथ हिरण्यं सम्भरति । अग्निर्ह वा अपोऽभिदध्यौ—"मिथुन्याभिः स्यामिति" । ताः सम्बभूव' तासु रेतः प्रासिञ्चत्—तद्धिरण्यमभवत्, तस्मादेतदग्निसङ्काशम् । अग्नेर्हि रेतः । तस्मादप्सु विन्दन्ति, अप्सु हि प्रासिञ्चत् । तस्मादेनेन न धावयति, न किञ्चन करोति । अथ यशो देवरेतसं हि । तद्यश-सैवैनमेतत् समर्द्धयति । सरेतसमेव कृत्स्नमग्निमाधत्ते । तस्माद्धिरण्यं सम्भरति ॥ ५ ॥

---

एवमन्त्राधेहतुर्यैनाभ्युक्षणं प्रशस्य मिथुनरूपेण प्रशंसति—योषा वा इति । अत्रापि स्त्रीलिङ्गत्वादापः पुंलिङ्ग-त्वादग्निः मिलित सदेकं मिथुनम्, तच्च पुत्रपौत्रादिप्रजननहेतुरिति 'एतम्' अग्निं 'समर्द्धयति' एतेन 'मिथु-नेन' । तदिति प्रागुक्त तद्विदं भवति । एवं लिङ्गसंबन्धेन प्रशस्य अनुप्रवेशनिरादिनार्थपर्यालोचनयापि प्रशंसति—अद्भिर्वा इति । "आपो वा इदमग्रे सलिलमासीत्"—इति श्रुतेः (तै० ब्रा० १ । १ । ३ । ५.) 'सर्वम्' 'इदम्' जगत् 'अद्भिः' खलु 'आप्तम्' अत आप्तव्याप्तिसामर्थ्याभिरद्भिः 'एनम्' अग्निं प्राप्य 'आधत्ते' इत्यर्थः । यस्मादेवं तस्मात् सम्भारनिवर्तननमयेऽभ्युक्षणार्थं कस्मिंश्चित् पात्रेऽपः सम्भरेदिति निगमयति तस्मादिति ॥ ४ ॥

हिरण्यस्य सम्भरणं विधत्ते—अथ हिरण्यमिति । तच्च हिरण्यमग्नेः रेतस्त्व प्रतिपादयति—अग्निर्ह वा इत्यादिना । 'अभिदध्यौ' अभिध्यानवानित्यर्थः । "ध्यै चिन्तायाम्" ( भ्वा० प० ९३३ ) इत्यस्मा-ल्लिटि "आत औ णल." ( पा० सू० ७ । १ । ३४ ) इत्यौत्वम्, अभिध्यानप्रकारमाह—मिथुन्याभि-रिति । 'आभिः' अद्भिरभ्युक्षणाद्भिः स्त्रीभि. 'मिथुनी स्याम्' प्रयोगमिथुन तत्संयोगान्मिथुन भवामीत्यर्थः । मिथुनशब्दादभूततद्भावे ( पा० सू० ५ । ४ । ५० । वा० २ ) च्विः । तस्मादेतदिति । यस्मादग्नेर्वीर्यं हिरण्यात्मना परिणतम्, 'तस्मात्' एतत् हिरण्यम् 'अग्निसङ्काशम्' अग्ने. सदृशमेव वर्णेन उपलभ्यते । यस्माच्चाप्सु निषिक्तम्, तस्मात् 'तद्धिरण्यम्' 'अप्सु' 'विन्दन्ति' लभन्त इत्यर्थः । तस्मादेनेनेति । यस्मादग्नेर्वं हिरण्यम्, 'तस्मादेनेन' दन्तान् 'न धावयेत्' । तथा यदन्यत् किमपि हीनं कर्म, तदपि नेन न कुर्यादित्यर्थः ।

अथ यश इति । 'अथ'—शब्दो वाक्यालङ्कारे । यस्मात्तद्धिरण्यं 'देवरेतसं' देवस्याग्नेर्वीर्यम्, तस्माद् यशोरूपम् । देवरेतसमिति "अनसन्तात्"—( पा० सू० ५ । ४ । १०३ ) इत्यकारः समासान्त. । तथा च

( त्य ) अथोषान्त्सम्भरति । ( त्य ) असौ ह वै द्यौरस्यै पृथिव्या ऽएता-न्पशून्प्रददौ तस्मात्पशव्यमूषरमित्याहुः पशवो ह्येवैते साक्षादेव तत्पशु-भिरेवैनमेतत्समर्द्धयति तेऽमुत ऽआगता ऽअस्यां पृथिव्यां प्रतिष्ठितास्त-मनयोर्द्यावापृथिव्यो रसं मन्यन्ते तदनयोरेवैनमेतद्द्यावापृथिव्यो रसेन समर्द्धयति तस्मादूषान्त्सम्भरति ॥ ६ ॥

( त्य ) अथाखुकरीषꣳसम्भरति । ( त्या ) आखवो ह वा ऽअस्यै पृथिव्यै रसं विदुस्तस्मात्तेऽधोऽध ऽइमां पृथिवीं चरन्तः पीविष्ठा ऽअस्यै हि रसं विदुस्ते यत्र तेऽस्यै पृथिव्यै रसं विदुस्ततऽउत्किरन्ति तदस्या ऽएवैनमेतत्पृथिव्यै रसेन समर्द्धयति तस्मादाखुकरीषꣳसम्भरति पुरीष्य ऽइति वै तमाहुर्यः श्रियं गच्छति समानं वै पुरीषं च करीषं च तदेतस्यैवा-वरुद्ध्यै तस्मादाखुकरीषꣳसम्भरति ॥ ७ ॥

---

अथोषान् सम्भरति । असौ ह वै द्यौरस्यै पृथिव्या एतान् पशून् प्रददौ, तस्मात् पशव्यमूषर-मित्याहुः । पशवो ह्येवैते साक्षादेव । तत् पशुभिरेवैनमेतत् समर्द्धयति । तेऽमुत आगता अस्यां पृथिव्यां प्रतिष्ठिता । तमनयोर्द्यावापृथिव्यो रसं मन्यन्ते । तदनयोरेवैनमेतद् द्यावापृथिव्यो रसेन समर्द्धयति । तस्मादूषान् सम्भरति ॥ ६ ॥

अथाखुकरीषं सम्भरति । आखवो ह वा अस्यै पृथिव्यै रसं विदुः, तस्मात्तेऽधोऽध इमां पृथिवीं चरन्तः पीविष्ठाः अस्यै हि रसं विदुस्ते । यत्र तेऽस्यै पृथिव्यै रसं विदुः, ततः उत्किरन्ति ।

---

हिरण्यसम्भरणेन यशसैव ' ' एनम् ' अग्निं समृद्धं करोति । एतेन–' यशसेव त्वद् ' इति प्रागुक्तं ( श० प० २ । १ । १ । १ । ) व्याख्यातं भवति । सरेतसमेवेति । हिरण्यस्य सम्भरणाभावे हि रेतसोऽन्यत्र स्थितत्वात् तद्रहित आहितोऽग्निरेतस्क एव भवति तत्सम्भरणे तु सरेतस ॥ ॥ ५ ॥

ऊषाख्यमृद्विशेषस्य सम्भरणं विधत्ते–अथोषानिति । ऊषाणां पशुत्वेन प्रतिपादयन् तद् समृद्धिहेतुत्वेन स्तौति–असौ ह वा इति । यस्मात् ' पृथिव्यै ' द्युलोकेन इमे पशवो दत्ता , ' तस्मात् ' , तत्सम्बन्धि ' ऊषरम् ' ऊषयुक्तं स्थानं पशव्यं पशुभ्यो हितम् ' इति ' ब्रह्मवादिन ' आहुः । पशवो हि, तादृशं स्थानमासाद्य लिहन्ति अत पशुहितत्वात् पश्वात्मका 'एवैते ' ऊषा । ऊषशब्दमिति । " ऊषसुषिमुष्कमधो र " ( पा० सू० ५ । २।१०७ ) इति मत्वर्थीयो र । स्पष्टमन्यत् । द्यावापृथिव्यो रसत्वेनैतान् प्रशंसति–तेऽमुत इति । ' अमुत ' अमुष्माद् द्युलोकात् ' आगता ', ' अस्यां ' पृथिव्यां प्रतिष्ठिता च अत एतावान्कस्य ऊषद्रव्यस्य द्यावापृथिवीरसत्वम् । किं तत स्याह–तदनयोरिति ॥ ६ ॥

द्रव्यान्तरस्य सम्भरणं विधत्ते–" अथाखुकरीषमिति । आखुभिः खननेन बिलात् बहिर्नीतां पांसवं आखु-करीषम् । तदत पृथिवीरसत्वेन स्तौति–आखवो हेति । यस्मात् 'आखवः ' पृथिवीरसज्ञा ' तस्मात् ' एव पृथिवी-

1– स्मभ्राता ' इति क० पु० पा० ।

( त्यु ) अथ शर्कराः सम्भरति । देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे सा हेयं पृथिव्यलेलायद्यथा पुष्करपर्णमेवं तांꣳ ह स्म वातः संवहति सोपैव देवाञ्जगामोपासुरान्त्सा यत्र देवानुपजगाम ॥ ८ ॥

तद्धोचुः । ( हं ) हन्तेमां प्रतिष्ठां दृꣳहामहै तस्यां ध्रुवायामशिथिलायामग्नी ऽआदधामहै ततोऽस्यै सपत्नान्निर्भक्ष्याम ऽइति ॥ ९ ॥

---

यदस्या एवैनमेतद् पृथिव्यै रसेन समर्द्धयति । तस्मादाखुकरीषं सम्भरति, पुरीष्य इति वैत-माहुः–यः श्रियं गच्छति । समानं वै पुरीषं च करीषं च । तदेतस्यैवावरुद्धये,–तस्मादाखु-करीषं सम्भरति ॥ ७ ॥

अथ शर्कराः सम्भरति । देवाश्च वा असुराश्च उभये प्राजापत्याः पस्पृधिरे । सा हेयं पृथिव्यले-लायत्, यथा–पुष्करपर्णमेवम् । तां ह स्म वातः संवहति । सोपैव देवान् जगामोपासुरान् । सा यत्र देवानुपजगाम ॥ ८ ॥

तद्धोचुः–" हन्तेमां प्रतिष्ठां दृंहामहै, तस्यां ध्रुवायामशिथिलायामग्नी आदधामहै; ततोऽस्यै सपत्नान् निर्भक्ष्याम इति " ॥ ९ ॥

---

मध्ये 'अघोऽधः चरन्तः' पृथिव्या अन्तश्चरणात् समीपे चरन्तः, ( तत्रत्यरसास्वादनेन 'पीविष्ठाः' अतिशयेन पीवानो मांसलाः, ते च ) ( तद्रसास्वादनसम्बन्धिनि ' यत्र यत्स्थाने ' रसं ' ' विदुः ' जानन्ति तद् स्थानं गत्वा ) ' रसम् ' उपजीव्य पांसून् बहिः ' उत्करन्ति ' उत्क्षिपन्ति । " कॄ विक्षेपे " ( तु० प० १२९ ) इति धातुः । अत आखूत्करस्य पृथिवीरसत्वात् तेनैव 'एनम्' अग्निं समृद्धं करोति । प्रकारान्तरेण स्तौति–पुरीष्य इतीति । ' यः ' खलु ' श्रियं ' सम्पदं ' गच्छति, ' 'त पुरीष्य इति' लोका वर्णयन्ति । नन्वेवं पुरीष-स्यैव श्रीप्राप्तिहेतुता, करीषस्य किमायातमित्यत आह–समानमिति । पुरीषकरीषशब्दावत्र समानार्थावित्यर्थः । अतः करीषसम्बन्धादग्निः श्रियं प्राप्नोति । तादृशस्याग्नेरवरोधाय करीषसम्भरणं कार्यमित्यर्थः ॥ ७ ॥

शर्कराणां सम्भरणं विधत्ते–अथ शर्करा इति । मृन्मिश्रिताः सूक्ष्मपाषाणाः शर्कराः । तेषामभिमिश्रितानां दार्ढ्यहेतुत्वमितिहासेन दर्शयति–देवाश्च वा इति । देवा असुरा उभये स्पर्द्धाञ्चक्रिरे । देवासुरेषु युद्धाय स्तो-कमेषु तद्रूपान् ' पृथिवी अलेलायत् ' चाञ्चल्यं प्राप्नोत् । तत्र दृष्टान्तमाह–यथेति । ' यथा ' जलस्योपरि ' पुष्करपर्णम् ' इतस्ततश्चलं भवति, ' एवम् ' पृथिव्यपि इतस्ततः कम्पिता । ' तां ' तदवस्थामापन्नां ' पृथिवीं ' ' वातः ' वायुः पुष्करपर्णवदेव ' संवहति स्म ' यथा दारुमयीं ( नावं ) कश्चित् परपारं नयति, स्थानात् स्थानान्तरं प्रापयति । ' सा ' त्वेवं कम्पमाना पृथिवी उभयविधानपि तान् ' उपजगाम ' पदा-न्तरे ' सा ' ' उप ' ' आ ' ' एव ' इति छेदः ॥ ८ ॥

यदा च सा देवान् प्राप्नोत्, तदा तत्कृतं परिहारं दर्शयति–तद्धोचुरिति । 'प्रतिष्ठां' प्रतिष्ठितां 'दृंहामहै' दृढीकरवामहै । ' ध्रुवायां ' निश्चलायाम्, ' अशिथिलायां ' दृढायाम् ' अग्नी ' गार्हपत्याहवनीयावादध्मः । वाक्यार्थः स्पष्टः । ' ततः ' तस्मात् अग्न्याधानात् ' अस्यै ' अस्याः पृथिव्याः सकाशात् शत्रुभूतानसुरान् ' निर्भक्ष्यामः ' निर्भक्तान् भागरहितान् कुर्म इत्यर्थः । इत्थं प्रतिज्ञातवन्तः ॥ ९ ॥

तद्यथा शङ्कुभिश्चर्म विहन्यात् । ( दे ) एवमिमां प्रतिष्ठां शर्कराभिः पर्यवृंहन्त सेयं ध्रुवाऽशिथिला प्रतिष्ठा तस्यां ध्रुवायामशिथिलायामग्नी ऽआदधत ततोऽस्यै सपत्नान्निरभजन् ॥ १० ॥

(जँस्त) तथो ऽएवैष ऽएतत् । (दि) इमां प्रतिष्ठां शर्कराभिः परिवृंहते तस्यां ध्रुवायामशिथिलायामग्नी ऽआधत्ते ततोऽस्यै सपत्नान्निर्भजति तस्माच्छर्कराः सम्भरति ॥ ११ ॥

तान्वा ऽएतान् । ( न्य ) पञ्च सम्भारान्त्सम्भरति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्तवः संवत्सरस्य ॥ १२ ॥

तदाहुः । षडेवऽर्तवः संवत्सरस्येति न्यूनमु तर्हि मिथुनं प्रजननं क्रियते न्यूनाद्वा ऽइमाः प्रजाः प्रजायन्ते तच्छ्रेयसमुत्तरवत्तस्मात्पञ्च भवन्ति यद्यु षडेवऽर्तवः संवत्सरस्येत्यग्निर्वैतेषां षष्ठस्तथो ऽएवैतदन्यूनं भवति ॥ १३ ॥

---

तद्यथा शङ्कुभिश्चर्म विहन्यात्, एवमिमां प्रतिष्ठां शर्कराभिः पर्यवृंहन्त । सेयं ध्रुवाऽशिथिला प्रतिष्ठा । तस्यां ध्रुवायामशिथिलायामग्नी आदधत । ततोऽस्यै सपत्नान्निरभजन् ॥ १० ॥

तथो एवैष एतत् इमां प्रतिष्ठां शर्कराभिः परिवृंहते । तस्यां ध्रुवायामशिथिलायामग्नी आधत्ते । ततोऽस्यै सपत्नान् निर्भजति । तस्माच्छर्कराः सम्भरति ॥ ११ ॥

तान्वा एतान् पञ्च सम्भारान् सम्भरति । पाङ्क्तो यज्ञः । पाङ्क्तः पशुः । पञ्चर्तवः संवत्सरस्य ॥ १२ ॥

तदाहुः—षडेवर्त्तवः संवत्सरस्य इति । न्यूनमु तर्हि मिथुनं प्रजननं क्रियते । न्यूनाद्वा इमाः प्रजाः

---

इत्थं प्रतिष्ठायां तं पुनः दर्शयति—तद्यथेति । 'यथा' अन्ये 'चर्म' भूमौ प्रसार्य 'शङ्कुभिः' कीलैः 'विहन्यात्' 'एव' 'प्रतिष्ठां' सर्वस्याप्याधारभूताम् 'इमां' पृथिवीं शर्कराभिः 'पर्यवृंहन्त' परितः दृढीकरणेन दृढीकृतवन्तः । निगदसिद्धमन्यत् ॥ १० ॥

एवं पुराकल्पमुदाहृत्यैतद्दृष्टान्तेन प्रकृतमनुसन्धत्ते—तथो एवेति । उक्तार्थमेतत् ॥ ११ ॥

विहितसम्भरणमनूद्य तत्सङ्ख्यां गौणेन प्रशंसति—तान् वा एतानिति । तान् पूर्वोक्तान् 'पञ्च सम्भारान्' 'सम्भरति' उदकहिरण्यवल्मीकवराहविहतशर्करा पञ्च सम्भाराः । पाङ्क्तो यज्ञ इति । पञ्चपदा पङ्क्तिः, ( ऐ. ब्रा. १ । ५ । ४, ५।४।३ ) तद्वचनात्, 'यज्ञ' अग्निशालाकर्मादिपर्यवेक्षितिष्क ( ऐ. ब्रा. २।३।६ ) इति पञ्चसङ्ख्यायोगात् 'पाङ्क्तः' । अस्थिमज्जेति पञ्चधातुमत्त्वात् 'पशुः' अपि 'पाङ्क्तः' ( ऐ. ब्रा. ६ । १ । २ ) संवत्सरसम्बन्धिनः 'ऋतवः' वसन्ताद्या अपि पञ्चसङ्ख्याकाः । हेमन्तशिशिरयोः समासाभिप्रायेण । तथा चैतरेयकम्—" हेमन्तशिशिरयोः समासेन "—( ऐ. ब्रा. १ । १ । १ ) इति ॥ १२ ॥

तदेतत् पञ्चत्व लोकप्रसिद्धिविरुद्धमित्याशङ्क्य—तदाहुरिति । हेमन्तशिशिरौ हि पृथक्त्वेन लोके प्रसिद्धौ,

---

१—उदकं, हिरण्यं, वल्मीकवपा, पुंस्कराः, पञ्चम इत्येवं पञ्च इति । २—त्वक् मांसं, स्नायुः, अस्थि, मज्जा चेति पञ्च धातवः । यद्यपि सप्त धातवः एतस्मिन् मतेऽपि धातून् पञ्चैवेति पञ्चधातुमत्त्वादित्युक्तम् ।

तदाहुः । ( नै ) नैवैकश्चन सम्भारꣳ सम्भरेदित्यस्यां वा एते सर्वे पृथिव्यां भवन्ति स यदेवास्यामाधत्ते तत्सर्वान्त्सम्भारानाप्नोति तस्मान्नैवैकश्चन सम्भारꣳ सम्भरेदिति तदु समेव भरेद्यदेवास्यामाधत्ते तत्सर्वान्त्सम्भारानाप्नोति यदु सम्भारैः सम्भृतैर्भवति तदु भवति तस्मादु समेव भरेत् ॥ १४ ॥ १ ॥

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ ( १-१ ) ॥

---

प्रजायन्ते । तच्छ्वःश्रेयसमुत्तरावत् । तस्मात्पञ्च भवन्ति । यद्वु षडेवर्तवः संवत्सरस्येति । अग्निरेवै-तेषां षष्ठः, तथो एवैतदन्यूनं भवति ॥ १३ ॥

तदाहुः-नैवैकश्चन सम्भारं सम्भरेदिति । अस्यां वा एते सर्वे पृथिव्यां भवन्ति । स यदेवास्या-माधत्ते तत्सर्वान् सम्भारानाप्नोति । तस्मात्-नैवैकश्चन सम्भारं सम्भरेदिति । तदु समेव भरेत् । यदेवास्यामाधत्ते-तत् सर्वान् सम्भारानाप्नोति । यदु सम्भारैः सम्भृतैर्भवति, तदु भवति । तस्मादु समेव भरेत् ॥ १४ ॥ १ ॥

इत्यग्न्याधानप्रकरणे सम्भारब्राह्मणम् ।

---

अन्तमयोरैक्यं न युक्तमिति भावः । परिहरति-न्यूनमिति । 'तर्हि' तथा सति षट्सु षट्के मिथुनत्रयसम्पत्तिः पञ्चके तु तन्मिथुनत्रयमेकेन ' न्यूनं ' भवति, नवं प्रजननसाधनम् । अत्र लोकप्रसिद्धिमाह-न्यूनादिति । स्त्रीपुंसयोर्वीर्यस्य परस्परन्यूनत्वे सति तस्मात् ' न्यूनात् ' मिथुनात् स्त्रीपुंलक्षणान्यपत्यानि ' जायन्ते ' । यस्मादेवं ' तस्मात् ' ' पञ्चसम्भारलक्षणेन यत् मिथुनस्य न्यूनत्वम्, ' तत् ' ' श्वःश्रेयसम् ' श्वः परदिवसे, श्रेयसो जनकम् । "श्वसो वसीय श्रेयसः" (पा० सू० ५।४।८० ) इत्यच् समासान्तः । 'उत्तरावत्', उत्तरा आगामिन्यभिवृद्धिः, तद्योगेनमित्यर्थः । एवम्भूतत्वात् षट्केऽपि सम्भाराणां पञ्चसङ्ख्याकत्वमुपपाद्यापादि न्यूनत्वं नाम कश्चिन्मन्येतेत्याशङ्क्य परिहरति- यद्वु इति । यदि षड्तुत्वं संवत्सरस्य सङ्ख्यातं, तर्हि एतेषां सम्भाराणामाधीयमानः 'अग्निरेव ' ' षष्ठः ' षट्सङ्ख्यापूरक ॥ १३ ॥

असम्भारपक्षमाह-तदाहुरिति । एकश्चनेति । एकमपीत्यर्थः । अत्रोपपत्तिमाह-अस्यामिति । आरोपित सर्वसम्भारभूतायां पृथिव्यामाधानादेव तत्कार्यप्राप्तेर्न पृथक् सम्भारापेक्षेत्यर्थः । सम्भरणपक्षमेव निगमयति- तदु समेवेति । यदु सम्भारैरिति । ' यत्,' खल्वाधाने सम्भृतैः 'सम्भारैः' निष्पन्नं भवति, 'तत्' खल्वाधानं भवति, सम्भारविरहे तु तदाधानमेव न भवतीति तत्तस्य पृथिवीसम्बन्धवशात् सम्भरणप्राप्तिरित्यर्थः ॥ १४ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये द्वितीये काण्डे प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ १ ॥ १ ॥

---

१-' तत्प्रजननसाधनम् ' इति पठन्तितम् । २-'न्यूनत्वं वा न कश्चिदेव ' इति क. पुस्तके ।

कृत्तिकास्वग्नी ऽआदधीत । (ते) एता वा ऽअग्निनक्षत्रं यत्कृत्तिकास्त-द्दे सलोम यो ऽग्निनक्षत्रे ऽग्नी ऽआदधातै तस्मात्कृत्तिकास्वादधीत ॥ १ ॥

(ते) एकं द्वे त्रीणि । चत्वारीति वा ऽअन्यानि नक्षत्राण्यथैता एव भूयिष्ठा यत्कृत्तिकास्तद्भूमानमेवैतदुपैति तस्मात्कृत्तिकास्वादधीत ॥ २ ॥

(ते) एता ह वै प्राच्यै दिशो न च्यवन्ते । सर्वाणि ह वा ऽअन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते तत्प्राच्यामेवास्यैतद्दिश्याहितौ भवतस्तस्मात् कृत्तिकास्वादधीत ॥ ३ ॥

(ता) अथ यस्मान्न कृत्तिकास्वादधीत । (ऋक्षा) ऋक्षाणाᳪं ह वा ऽएता अग्रे पत्न्य आसुः सप्तर्षीन्तु ह स्म वै पुरऽर्क्षा इत्याचक्षते ता मिथुनेन

अथ नक्षत्रब्राह्मणम् ।

कृत्तिकास्वग्नी आदधीत । एता वा अग्निनक्षत्रं यत् कृत्तिकाः । तद्दै सलोम-योऽग्निनक्षत्रेऽग्नी आदधातै । तस्मात् कृत्तिकास्वादधीत ॥ १ ॥

एकं द्वे त्रीणि चत्वारीति वा अन्यानि नक्षत्राणि । अथैता एव भूयिष्ठाः यत् कृत्तिकाः तद् भूमानमेवैतदुपैति । तस्मात् कृत्तिकास्वादधीत ॥ २ ॥

एता ह वै प्राच्यै दिशो न च्यवन्ते । सर्वाणि ह वा अन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते । तत्प्राच्यामेवास्यैतद्दिश्याहितौ भवतः । तस्मात्-कृत्तिकास्वादधीत ॥ ३ ॥

अथ यस्मात्-न कृत्तिकास्वादधीत । ऋक्षाणा ह वा एता अग्रे पत्न्य आसुः । सप्तर्षीन्तु ह स्म

कर्मणः कालसापेक्षत्वादाधानस्य नक्षत्र विधत्ते-कृत्तिकास्वित्यादिना (का श्रौ. सू. ४ । १७९) । 'अग्नी' गार्हपत्याहवनीयावित्यर्थः । अग्निदेवतात्वादग्निनक्षत्र कृत्तिकारूपम् । श्रूयते हि-"कृत्तिका नक्षत्रमग्निर्देवता" इति । तस्मिन्नग्निनक्षत्रे अग्न्याधाने 'सलोम' सदृश, योग्यमिति यावत् ॥ १ ॥

अथैतस्य नक्षत्रस्य बहुतारकत्वेन प्रशंसति-एकमिति । इतराणि 'अन्यानि नक्षत्राणि एक-द्वि-त्रि-चतु-संख्याधिष्ठानान्यर्थानि, कृत्तिकास्तु षट्संख्याधिष्ठानत्वेनात् 'भूयिष्ठा' बहुतरा । तत्रार्द्रादीनाम् 'एकम्' अधिष्ठानम्, फल्गुन्यादीनां 'द्वे' अश्वियादीनां 'त्रीणि' पुनर्वस्वादीनां 'चत्वारि' । 'तत्' तस्मात्, एभ्यो भूयिष्ठनक्षत्राधानात् यजमानोऽपि 'भूमानं' बहुत्वमेवोपगच्छतीत्यर्थः ॥ २ ॥

नियतदिक्सम्बन्धत्वेनैता प्रशंसति-एता ह वा इति । 'प्राच्यै' प्राच्याः 'दिशः' सकाशात् 'न च्यवन्ते' दक्षिणत उत्तरतो वा विक्षेपवशान चलन्ति, किन्तु नियमेन शुद्धप्राच्यामेवोद्यन्ति, 'अन्यानि' 'नक्षत्राणि' प्राचीदिग्भागाद् दक्षिणत उत्तरतो वा विक्षेपवशाच्चलन्ति, प्राचीदिग्भागाद् दक्षिणत उत्तरतश्च नियमेन परिवर्तन्ते । तत् प्राच्यामित्यादि । निगदसिद्धम् ॥ ३ ॥

कृत्तिकास्वाधानपक्षे मिथुनर्द्धिहेतुत्वान्निषेधति-अथ यस्मादिति । 'यस्माद्' वक्ष्यमाणदोषोऽस्ति,

१-'एतद्वा अग्नेर्नक्षत्रं यत् कृत्तिकाः'' (तै० ब्रा० १ । १ । २ । १) २-"तत्र विस्तरेण नामस्तु० प्र० ४८ ।

व्यार्ध्यन्तामी ह्युत्तराहि सप्तऽर्षय उद्यन्ति पुर एता अशमिव वै तद्यो मिथुनेन व्यृद्धः स नेन्मिथुनेन व्यृद्ध्याऽइति तस्मान्न कृत्तिकास्वादधीत ॥ ४ ॥

तद्वेव दधीत । ( तासि ) अग्निर्वा ऽएतासां मिथुनमग्निनैता मिथुनेन समृद्धास्तस्मादेव दधीत ॥ ५ ॥

रोहिण्यामग्नी ऽआदधीत । रोहिण्याᳫं ह वै प्रजापतिः प्रजाकामोऽग्नी ऽआदधे स प्रजा असृजत ता अस्य प्रजाः सृष्टा एकरूपा उपस्तब्धास्तस्थू रोहिण्य इवैव तद्वै रोहिण्यै रोहिणीत्वं बहुर्हैव प्रजया पशुभिर्भवति य एवं विद्वान् रोहिण्यामाधत्ते ॥ ६ ॥

---

वै पुरक्षा इत्याचक्षते । ता मिथुनेन व्यार्ध्यन्त । अमी ह्युत्तराहि सप्तर्षय उद्यन्ति, पुर एताः । अशमिव वै तत्—यो मिथुनेन व्यृद्धः । स नेन्मिथुनेन व्यृद्ध्यै इति । तस्मात्—न कृत्तिकास्वादधीत ॥४॥

तद्वेव दधीत । अग्निर्वा एतासां मिथुनम् । अग्निनैता मिथुनेन समृद्धाः । तस्मादेव दधीत ॥५॥

रोहिण्यामग्नी आदधीत । रोहिण्यां ह वै प्रजापतिः प्रजाकामोऽग्नी आदधे स प्रजा असृजत । ता अस्य प्रजाः सृष्टा एकरूपा उपस्तब्धास्तस्थुः, रोहिण्य इवैव । तद्वै रोहिण्यै रोहिणीत्वम् । बहुर्हैव प्रजया पशुभिर्भवति—य एवं विद्वान् रोहिण्यामाधत्ते ॥ ६ ॥

---

तस्मात् 'कृत्तिकासु न आदधीत' । कोऽसौ दोषः ? तमुपन्यस्यति— ऋक्षाणां हेति । ऋक्षशब्दार्थमाह— सप्तर्षीनिति । 'ऋक्षं' नक्षत्रम्; तद्रूपेणावस्थानात् । इह 'ऋक्ष'—शब्देन सप्तर्षयोऽभिधीयन्ते पुरं ऋक्षा इति पुरेत्यस्य "ऋत्यकः" ( पा. सू. ६-१-१२८ ) इति प्रकृतिभावो ह्रस्वश्च । 'व्यार्ध्यन्त' वियुक्ता अभवन् । वृद्धिमेव देशभेदोदयेन स्पष्टयति—अमी हीति । 'अमी' खलु 'सप्तर्षयः' 'उत्तराहि' । "आहि च दूरे"—( पा. सू. ५ । ३ । ३७ ) इति । 'आहि' प्रत्ययः । दूरदेशे उत्तरदिग्भागे 'उद्यन्ति' । 'एता' कृत्तिकाः 'पुरः' पूर्वस्यां दिशि । अत एव तासां विभिन्नदेशावस्थानेन पुरुषसम्भोगविरहान्मिथुनव्यृद्धिः । तथासमीचीनमित्याह—अशमिव वै तद्यो मिथुनेन व्यृद्ध्यते, अतो 'न इत्' नैवाहं 'मिथुनेन' 'व्यृद्ध्यै' व्यृद्धो भवानीत्यभिप्रेत्य तत्र नादधीतेत्यर्थः ॥ ४ ॥

अथैतद्दोषं परिहृत्याधानपक्षमेव निगमयति—तद्वेवेति । 'तदु ह आ एव' तस्मिन्नपि नक्षत्रे आदधीतैव । अग्निर्वा इत्यादि । स्पष्टम् ॥ ५ ॥

नक्षत्रान्तरं विधाय प्रशंसति—रोहिण्यामिति । 'आदधे' आधानं कृतवान् । 'उपस्तब्धाः' प्रतिबद्धगतयो विनाशरहिताः पुत्रपौत्रादिरूपेणैकरूपा अविच्छिन्नप्रवाहाः 'तस्थुः' स्थितवत्यः । ताश्च 'रोहिण्यः' स्वर्गादिलोकारोहणसाधनभूता इव स्थिताः । एतदुपजीवनेन नामनिर्वचनं करोति—तद्वा इति । स्पष्टार्थमन्यत् ॥ ६ ॥

रोहिण्यामु ह वै पशवः । ( वो ) अग्नीऽआदधिरे मनुष्याणां कामᳫँ रोहेमेति ते मनुष्याणां काममरोहन्यमु हैव तत्पशवो मनुष्येषु काममरोहंस्तमु हैव पशुषु कामᳫँरोहति य एवं विद्वान्रोहिण्यामाधत्ते ॥ ७ ॥

मृगशीर्षेऽग्नीऽआदधीत । ( ते ) एतद्वै प्रजापतेः शिरो यन्मृगशीर्षᳫँ श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिर इत्याहुः श्रियᳫँ ह गच्छति य एवं विद्वान् मृगशीर्षेऽआधत्ते ॥ ८ ॥

( तेऽय ) अथ यस्मान्न मृगशीर्षे ऽआदधीत प्रजापतेर्वा एतच्छरीरं यत्र वा ऽएनं तदविध्यंस्तादिषुणा त्रिकाण्डेनेत्याहुः स ऽएतच्छरीरमजहाद्वास्तु वै शरीरमयज्ञियं निर्वीर्यं तस्मान्न मृगशीर्षे ऽआदधीत ॥ ९॥

---

रोहिण्यामु ह वै पशवोऽग्नी आदधिरे—मनुष्याणां कामं रोहेमेति । ते मनुष्याणां काममरोहन् । यमु हैव तत् पशवो मनुष्येषु काममरोहन्, तमु हैव पशुषु कामं रोहति—य एवं विद्वान् रोहिण्यामाधत्ते ॥ ७ ॥

मृगशीर्षेऽग्नी आदधीत । एतद्वै प्रजापतेः शिरो यन्मृगशीर्षम् । श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्—योऽर्द्धस्य श्रेष्ठो भवति, असावमुष्यार्द्धस्य शिर इत्याहुः । श्रियं ह गच्छति—य एवं विद्वान् मृगशीर्षे आधत्ते ॥ ८ ॥

अथ यस्मात्—न मृगशीर्षे आदधीत । प्रजापतेर्वा एतच्छरीरं यत्र वा एनं तदविध्यंस्तादिषुणा

---

रोहिण्याधानं प्रकारान्तरेण प्रशंसति—रोहिण्यामु हेति । मनुष्याणां कामं रोहेमेति । 'मनुष्याणां' 'कामं' भोग्यवस्तुविषयं, तत्पूरणसामर्थ्ययोगेन तं प्राप्नुयामेत्यर्थः । यमु हैवेति । रोहिण्याधानेन काम्यमानभोग्यवस्तुजातपूरणसामर्थ्यम् 'मनुष्येषु' अवस्थितम् 'यमु' यमेव 'कामं' प्राक् प्राप्नुवन्, 'तम्' एव इदानीं 'पशुषु' अवस्थितं रोहिण्यामाधानतः प्राप्नोति । एवमेव सर्वे जना उपजीव्यत्वेन कामयन्त इति भावः ॥७॥

नक्षत्रान्तरं विधाय प्रशंसति—मृगशीर्षे इति । एतद्वा इति । पुरा खलु प्रजापतिः मृगरूपमास्थाय मृगीभूतां स्वदुहितरमेवोपागमत् । एतत् ज्ञात्वा—अकार्यकारिणं प्रजापतेः शिरश्छेत्तुं देवाः कश्चित् क्रोधमयं पुरुषं निर्माय प्रत्यतिष्ठिपन् । स चेषुणा तस्य शिरश्चिच्छेद । तच्च मृगशरीरमिषुच्छिन्नशिरश्चेत्येतद्द्वयमन्तरिक्षमुत्क्रम्य नक्षत्रात्मनाऽवस्थितं सदृश्यते । तथा चैतरेयके—"प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत्"—( ऐ० ब्रा० ३.३.९. ) इत्युपक्रम्य "सो एनेषुस्त्रिकाण्डा"—इत्यन्तेनायमर्थः प्रतिपादितः । ईदृशी श्रुत्यन्तरप्रसिद्धिरत्र वैशब्देन द्योत्यते । श्रीर्वै शिर इत्यादि । व्याख्यातम् ॥ ८ ॥

तदेतं मृगशीर्षाख्यस्य नक्षत्रस्याधाने प्रजापतिशिरश्छेदसम्भूतेस्तद्दोषादाधानं निषेधति—अथ यस्मान्नेति ।

---

१—'योग्यन' इति पा । २—'कम्यमानभोग्यवस्तुजातपूरणसामर्थ्ययोगात्' इति क पा । ३—"यो रोहिण्यामग्निमाधत्ते, ऋध्नोत्येव" इति तै० ब्रा० १ १ २ २ । ४—"मृगमृगरूपमास्थाय" इति पा. । ५—'स्वां दुहितरमेवाभ्युपागमत्' इति पा । ६—'देवस्तेनेषुणा शिरश्छेत्तुमगम्' इति पा ।

तद्देव दधीत । न वा ऽएतस्य देवस्य वास्तु नायज्ञियं न शरीरमस्ति यत्प्रजापतेस्तस्माद्देव दधीत पुनर्वस्वोः पुनराधेयमादधीतेति ॥ १० ॥

फल्गुनीष्वग्नी ऽआदधीत । (ते) एता वा ऽइन्द्रनक्षत्रं यत्फल्गुन्यो ऽप्यस्य प्रतिनाम्न्योऽर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नामार्जुन्यो वै नामैतास्ता एतत्परोऽक्षमाचक्षते फल्गुन्य इति को ह्येतस्यार्हति गुह्यं नाम

त्रिकाण्डेनेत्याहुः । स एतच्छरीरमजहात् । वास्तु वै शरीरमयज्ञियं निर्वीर्यम् । तस्मात्-न मृगशीर्ष आदधीत ॥ ९ ॥

तद्देव दधीत । न वा एतस्य देवस्य वास्तु, नायज्ञियम्, न शरीरमस्ति, यत्-प्रजापतेः । तस्मात् देव दधीत । पुनर्वस्वोः पुनराधेयमादधीतेति ॥ १० ॥

फल्गुनीष्वग्नी आदधीत । एता वा इन्द्रनक्षत्रं यत् फल्गुन्यः । अप्यस्य प्रतिनाम्न्यः । अर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम अर्जुन्यो वै नामैताः । ता एतत् परोक्षमाचक्षते-फल्गुन्य इति ।

मृगशीर्षाधान न कार्यम्, अत्र हेतुः प्रतिपाद्यत इत्यर्थः । कोऽसौ हेतुः ? तमाह-प्रजापतेरिति । मृगशीर्षाख्यस्य नक्षत्रस्य प्रजापतिशरीरत्वमाह-'यत्र' यस्मिन् समये 'एनम्' प्रजापतिं मृगरूपम्, 'तत्' तेन स्वदुहितृगमनरूपेण दोषेण हेतुना देवाः 'अविध्यन्', 'सन्' तदानीं पर्वत्रयसम्बन्धवत्त्रयोपेतेन 'इषुणा' तत्तु तच्छिरश्छिन्नम् 'इत्याहुः' ब्रह्मवादिनः । 'स' च प्रजापतिस्तदानीम् 'एतच्छरीरम्' त्यक्तवान् । अतो निरात्मकत्वात् 'निर्वीर्यम्' नक्षत्रात्मनाऽवस्थित मृगशिरः 'वास्तु' शून्यस्थानम् । यत एवात्मना त्यक्तम्, अत एव 'शरीरम्' विशरणशीलम् अत एव च 'अयज्ञियम्' यज्ञानर्हम्, न हि मृतशरीरस्य यज्ञार्हत्वं सम्भवति । 'तस्मात्' तदात्मके मृगशीर्षाख्ये नक्षत्रे आधानं न युक्तमित्यर्थः ॥ ९ ॥

इमं दोषं परिहरन् प्रागुक्तमेव पक्षं निगमयति-तद्देवेति । देवस्येति । मनुष्येण त्यक्तस्य शरीरस्य हि वास्त्वादिरूपत्वम् । अयं हि प्रजापतिर्देवः, तेन त्यक्तस्य तत्त्वाभावात् वास्त्वादिरूपो दोषो नास्ति, मृगरूपस्य तस्य शिरः स्वमहिम्नैव नक्षत्ररूपेण सम्पन्नम्, न खलु मानुषशिरस्तया भवितुमर्हति । तस्मात् तत् सर्वार्थमेवेति तत्राधाने नोक्तदोष इत्यर्थः ।

पुनर्वस्वाख्यस्य नक्षत्रस्य लिङ्गवशात् पुनराधेयविषयतामाह-पुनर्वस्वोरिति । आहितानामग्नीनां पुनर्निमित्तवशादाधानं पुनराधेयम् । (पुनर्वस्वोरिति द्विवचनं पुष्याभिप्रायम्) नक्षत्रं चैतत् नष्टस्य वसुनः पुनःप्राप्तिहेतुत्वात् पुनर्वस्वाख्यम् । तथा च तैत्तिरीयके स्पष्टमाम्नातम्-"पुनर्वस्वोरग्निमादधीत, पुनरेनं वाम उपावर्तते"-(तै. ब्रा. १. १. २. ३.) इति ॥ १० ॥

नक्षत्रान्तरं विधाय प्रशंसति-फल्गुनीष्वग्नी इति । पूर्वोत्तरयोः फल्गुन्याख्ययोर्नक्षत्रयोः प्रत्येकमधिष्ठानद्वित्वोपपादनम् । फल्गुनीनामिन्द्रसम्बन्धित्वेन प्रशंसति-एता वा इति । कथमस्य नक्षत्रस्येन्द्रसम्बन्ध इत्यत

1-'स्वमृगरूपम्' इति पाठः । 2-"त्रिकाण्डा, अनीक, शल्यः, तेजनम् इत्यवयवत्रयोपेता"-इति ऐ. ब्रा. ३ । ३ । ९ सा भाष्ये । 3-'परित्यक्तस्य तत्त्वाभावात्' इति पा. । 4-'नक्षत्ररूपत्वं सम्पन्नम्' इति पा. । 5-"पुनराधेयमाधानप्रतिज्ञातम्" का. श्रौ. सू. ४. ३५९. "पुनर्वस्वोः" का. श्रौ. सू. ४. ३६३ ॥ 6-'पुनर्वस्वाभिलिङ्गवशात्'-इति क. पा. । 7-'द्विवत्' इति क. ।

गृहीतुमिन्द्रो वै यजमानस्तत्स्व ऽएवैतन्नक्षत्रेऽग्नी आधत्त ऽइन्द्रो यज्ञस्य देवतैतेना हास्यैतत्सेन्द्रमग्न्याधेयं भवति पूर्वयोरादधीत पुरस्तात्क्रतुꣳ हास्मै भवत्युत्तरयोरादधीत श्वःश्रेयसꣳ हैवास्मा ऽउत्तरावद्भवति ॥ ११ ॥

हस्तेऽग्नी ऽआदधीत य इच्छेत्प्र मे दीयेतेति तद्ध्य् ऽअनुष्ठ्या यद्धस्तेन प्रदीयते प्र हैवास्मै दीयते ॥ १२ ॥

चित्रायामग्नी ऽआदधीत । देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे त ऽउभय ऽएवामुं लोकꣳ समारुरुक्षाञ्चक्रुर्दिवमेव ततोऽसुरा रौहिणमित्यग्निं चिक्यिरेऽनेनामुं लोकꣳ समारोक्ष्याम इति ॥ १३ ॥

---

को ह्येतस्यार्हति गुह्यं नाम ग्रहीतुम् । इन्द्रो वै यजमानः । तत् स्व एवैतन्नक्षत्रेऽग्नी आधत्ते । इन्द्रो यज्ञस्य देवता । एतेनो हास्यैतत् सेन्द्रमग्न्याधेयं भवति । पूर्वयोरादधीत—पुरस्तात्क्रतुर्हैवास्मै भवति । उत्तरयोरादधीत—श्वःश्रेयसं हैवास्मा उत्तरावद् भवति ॥ ११ ॥

हस्तेऽग्नी आदधीत—य इच्छेत् ' प्र मे दीयेतेति ' । तद्ध्य् अनुष्ठ्या, यद्धस्तेन प्रदीयते । प्र हैवास्मै दीयते ॥ १२ ॥

चित्रायामग्नी आदधीत । देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे । त उभय एवामुं लोकं समारुरुक्षाञ्चक्रुर्दिवमेव । ततोऽसुरा रौहिणमित्यग्निं चिक्यिरे—" अनेनामुं लोकं समारोक्ष्याम ' इति ॥ १३ ॥

---

आह—अप्यस्येति । ' अस्य ' इन्द्रस्य प्रतिनिधिभूता फल्गुन्यः सम्भाव्यन्ते । ' अपि ' सम्भावनार्थे । प्रतिनिधित्वं च समानशब्दाभिधेयत्वादित्याह— अर्जुनो हेति । ' अर्जुन ' ' इति ' हि इन्द्रस्य रहस्यं नाम अत एव खलु तत्पुत्रः पाण्डवमध्यमः तन्नामप्रथितः । अर्जुनफल्गुनशब्दौ च पर्यायौ, "अर्जुनः फल्गुनः पार्थः "—इति समानार्थकतया परिगणनात् । ' अर्जुन्य ' एव ' एता ', परोक्षेण ' फल्गुन्य इति ' उच्यन्ते । ननु किं परोक्षेणेष्यत आह—कोऽर्हतीति । अत्र फल्गुनीशब्दस्य परम्परये द्रोमलक्षकत्वात् तन्नामकं नक्षत्रम् । इन्द्रो वा इत्यादि । स्पष्टम् । फल्गुन्योः पूर्वे चरमयुगलयोः तद्विहितमाधानं प्रशंसति पूर्वयोरित्यादिना । पुरस्तात् क्रतुरिति । पूर्वस्मिन्नागामिनि काले ज्योतिष्टोमादिलक्षणः ' क्रतु ' र्भवतीति तात्पर्यम् । श्वःश्रेयसमित्यादि । उक्तार्थम् ॥ ११ ॥

एवं परोक्षार्थमाधानस्य प्रपञ्च्य तदर्थं नक्षत्रान्तरं प्रशंसति—हस्तेऽग्नी आदधीतेत्यादि । अथ मह्यं प्रदीयतामिति य इच्छेत् स हस्ते आदधीताग्नी । हस्तेन प्रदत्तं साक्षात् प्रदीयत एव । ' ह ' इति पुरावृत्ते । ' अनुष्ठ्या '—शब्दः साक्षाद्वाची । स्वहस्तेन ' यत् ' खलु दानम्, ' तद् ' एव ' अनुष्ठ्या ' मनुष्येन समीचीनम् । अतो हस्तनक्षत्रे अग्न्याधानात् परकर्तृकं हस्तेन दानं प्राप्नोतीति तात्पर्यार्थः ॥ १२ ॥

नक्षत्रान्तरं विधाय प्रशंसति—चित्रायामित्यादि । आरुरुक्षाञ्चक्रुरिति । आरोढुमिच्छां कृतवन्त इत्यर्थः ।

---

१–" पूर्वयोः फल्गुन्योरग्निमादधीत " इत्यादि, " उत्तरयोः फल्गुन्योरग्निमादधीत " इत्यादि च तै० ब्रा० १ । १ । २ । ४ ।
२–" हस्ते धनकामस्य " का० श्रौ० सू० ४ । १७० । ३–" चित्रा च क्षत्रियस्य " इति का० श्रौ० सू० ४ । १७८ ।

(ती) इन्द्रो ह वा ऽईक्षाञ्चक्रे । (क ऽ) इमं चेद्वा ऽइमे चिन्वते तत एव नोऽभिभवन्तीति स ब्राह्मणो ब्रुवाण एकेष्टकां प्रवव्येयाय ॥ १४ ॥
स होवाच । हन्ताहमिमामप्युपदधा ऽइति तथेति तामुपायत्त तेषामल्पकादेवाग्निरसश्चिन ऽआस ॥ १५ ॥
(सा) अथ होवाच । (चा) अन्वा ऽअहं तां दास्ये या ममेहेति ताम-भिपद्यावबर्ह तस्यामावृढायामग्निर्व्यवशशादाग्नेर्व्यवशादमन्वसुरा व्यवशेदुः स ताऽएवेष्टका वज्रान्कृत्वा ग्रीवाः प्रचिच्छेद ॥ १६ ॥

---

इन्द्रो ह वा ईक्षाञ्चक्रे 'इमं चेद्वा इमे चिन्वते, तत एव नोऽभिभवन्ति' इति । स ब्राह्मणो ब्रुवाण एकेष्टकां प्रवव्येयाय ॥ १४ ॥
स होवाच–'हन्ताहमिमामप्युपदधे' इति । तथेति तामुपायत्त । तेषामल्पकादेवाग्निरसश्चित आस ॥ १५ ॥
अथ होवाच–'अन्वा अहं तां दास्ये या ममेह' इति । तामभिपद्यावबर्ह । तस्यामावृढायामग्निर्व्यवशशाद । अग्नेर्व्यवशादमनु असुरा व्यवशेदुः । स ता एवेष्टका वज्रान् कृत्वा ग्रीवाः प्रचिच्छेद ॥ १६ ॥

---

असुमिति 'अदस्'-शब्देन परोक्षेण यो लोको निर्दिष्टः, तं विशिनष्टि–दिवमेवेति । 'ततः' अनन्तरम् 'असुराः' 'रौहिणमिति' एतन्नामकं रोहणसाधनम् 'अग्नि' 'चिक्ये' । व्यत्ययेनैकवचनम्, (पा. सू. १ । ४ । ९) 'चिक्यिरे' चितवन्तः । अनेनेत्यादि । स्पष्टम् ॥ १३ ॥
इत्थं द्युलोकं समारुरुक्षतोऽसुरानालक्ष्य तेषा विप्रेत्रणमिन्द्रश्चेष्टयति–इन्द्रो हेति । इमं चेदित्यादि । यम 'इमम्' अग्निं वयं चेष्यामः, इममेव चेदसुरा अपि चिन्वीरन्, 'ततः' तस्मात् 'एव' साधनात् 'नः' अस्मान् 'अभिभवन्ति' असुरा अभिभवितुं समर्था भवन्ति । 'इति' एवं विचार्य, 'सः' इन्द्रः 'ब्राह्मणः' भूत्वा असुरहितं ब्रुवाण एव 'एकामिष्टका' 'प्रवव्य' गृहीत्वा 'इयाय' जगाम ॥ १४ ॥
स होवाचेति । गत्वा च तान् असुरान् 'उवाच' । 'अहम्' अपि 'इमाम्' इष्टकां मदीयेऽग्नौ 'उपदधे' उपधानं करवाणि 'इति' । "तथा" 'इति' तैरनुज्ञातः, 'ताम्' इष्टकां तत्र 'उपायत्त' । अन्यदीये चयने अन्यदीयेष्टकोपधानमशास्त्रीयमित्यनेनास्मात् 'अल्पकादेव' अंशात् 'तेषाम्' असुराणाम् 'अग्निः' असम्यक् चितो विकलो बभूव ॥ १५ ॥
अथ होवाचेति । 'अथ' कालान्तरे स एव ब्राह्मणरूप इन्द्रस्तानसुरान् 'उवाच' । 'इह' अस्मिश्चित्निप्रदेशे 'या' 'मम' इष्टका, 'ताम्' अहम् 'आदास्ये' इत्युक्त्वा तत्सर्वमभिप्राय, 'ताम्' इष्टकाम् 'आववर्ह' उद्धृतवान्, तस्मात् स्थानात्प्रच्यावितवान् । "बृहू उद्यमने" –(तु. प. ९.७), इति धातुः । 'तस्यां' चेष्टकायां चित्याग्नेः सकाशान्निष्कासितायां सत्याम्, सः 'अग्निः' 'व्यवशशाद'

---

१–भाष्यकारमते 'चिक्ये' इत्येव मूले न तु 'चिक्यिरे' इत्यनेन व्याख्यानेन प्रतीयते । २–"अशो अशः यथोचितात्" इत्यमर । ३ । ८ । २३ । 'व्यवशशाद' इति पाठः ।

ते ह देवाः समेत्योचुः । ( श्रि ) चित्रं वा अभूम य इयतः सपत्नानवधिष्मेति तद्वै चित्रायै चित्रात्वं चित्रं ह भवति हन्ति सपत्नान्हन्ति द्विषन्तं भ्रातृव्यं य एवं विद्वांश्चित्रायामाधत्ते तस्मादेतत्क्षत्रिय एव नक्षत्रमुपेप्सेज्जिघांसतीव ह्येष सपत्नान्वीव जिगीषते ॥ १७ ॥

नाना ह वा एतान्यग्रे क्षत्राण्यासुः । ( श्रुं ) यथैवासौ सूर्य एवं तेषामेष उद्यन्नेव वीर्यं क्षत्रमादत्त तस्मादादित्यो नाम यदेषां वीर्यं क्षत्रमादत्त १८

ते ह देवा ऊचुः । ( श्रीं ) यानि वै तानि क्षत्राण्यभूवन् न वै तानि क्षत्राण्यभूवन्निति तद्वै नक्षत्राणां नक्षत्रत्वं तस्मादु सूर्यनक्षत्र एव स्यादेप

---

ते ह देवाः समेत्योचुः—' चित्रं वा अभूम, य इयतः सपत्नानवधिष्म ' इति । तद्वै चित्रायै चित्रात्वम् । चित्र ह भवति, हन्ति सपत्नान्, हन्ति द्विषन्तं भ्रातृव्यम्, य एवं विद्वांश्चित्रायामाधत्ते । तस्मादेतत् क्षत्रिय एव नक्षत्रमुपेप्सेत् । जिघांसतीव ह्येष सपत्नान्, वीव जिगीषते ॥ १७ ॥

नाना ह वा एतान्यग्रे क्षत्राण्यासुः—यथैवासौ सूर्यः, एवम् । तेषामेष उद्यन्नेव वीर्यं क्षत्रमादत्त । तस्मादादित्यो नाम—यदेषां वीर्यं क्षत्रमादत्त ॥ १८ ॥

ते ह देवा ऊचुः—' यानि वै तानि क्षत्राण्यभूवन्, न वै तानि क्षत्राण्यभूवन् ' इति तद्वै नक्षत्राणा

---

विशीर्णो बभूव । तदनन्तरं स्वेनार ' असुरा ' च ' व्यमशेदुः ' व्यवसन्नाः, शिथिला बभूवुः । स वा इत्यादि । ' स ' इन्द्रः ' ता ' चित्याभिमन्त्रा ' इष्टका ' ' एव ' ' वजात् ' विशाय असुरानभीर्णो ' प्रीव ' प्रविच्छेद ॥ १६ ॥

चित्रानाम निर्वक्ति—ते ह देवा इति । चित्राख्येष्टका । ' इयत ' एतावत ' सपत्नान् ' ' अवधिष्म ' असमस्ताघ्नम । तत् अस्या एव चित्रहेतुत्वात् ' चित्रा ' नाम सम्पन्नमित्यर्थः । चित्रं इत्यादि निगदसिद्धम् । तस्मादेतदित्यादि । यस्मादुक्तरीत्या चित्रानक्षत्रस्य शत्रुहननसाधनत्वम्, ' तस्मात् ' आधाने क्षत्रिय एव, ' एतत् ' नक्षत्र ' उपेप्सेत् ' स्वीकुर्यात् । तत्र कारणमाह—जिघांसतीवेति । ' एष ' खलु क्षत्रियः अन्यान्—शत्रून् ' जिघांसति ' हन्तुमिच्छति ' इव, ' तथा ' विजिगीषते ' ' इव ' विजेतुमिच्छतीव । तस्मात् शत्रुहननकामस्य क्षत्रियस्यैतन्नक्षत्रम्, नेतरस्येत्यर्थः ॥ १७ ॥

सूर्येणापहृतवीर्याणि कृत्तिकादिनक्षत्राण्यनादृत्य तेजस्विनि यस्मिन् नक्षत्र उदेति तत्राधानं कार्यमित्याह—नाना ह वा इति । पुरा खलु कृत्तिकादिनक्षत्रमण्डलानि सूर्यमण्डलवत् तेजस्वीन्येव बभूवुः । ' एष ' खलु ' सूर्यः ' ' उद्यन् ' उदयं प्राप्नुवन् ' क्षत्रं ' तेजः सामर्थ्यं चोदयमाप्नुवन् ' एषां ' तेषां ' ' वीर्यम् ' ' आदत्त ' स्वीकृतवान् । ' तस्मात् ' आदानात् ' आदित्य ' इति उच्यते ॥ १८ ॥

नक्षत्रमिति नामधेयं निर्वक्ति—ते हेति । ' यानि ' खलु पुरा ' क्षत्राणि ' ' अभूवन्, ' ' तानि ' इदानीं सूर्येण

---

१–' व्यवसन्नाः '–इ० इ० पु० पा० । २–" विद्यानिहतवीर्यस्य " का० श्रौ० सू० ४ । १ । ७ । ८ । ३–" स विद्यादभिमन्त्र्येत " इत्यादि तै० ब्रा० १ । १ । २ । ६ । ४–' आददत् ' इति पाठान्तरम् ।

हृथेषां व्वीर्य्यं क्षत्रमादत्त यद्यु नक्षत्रकामः स्यादेतद्वाऽअनपराद्धं नक्षत्रं यत्सूर्य्यः स एतेनैव पुण्याहेन यदेतेषां नक्षत्राणां कामयेत तदुपेत्सेत्तस्मादु सूर्य्यनक्षत्र ऽएव स्यात् ॥ १९ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ २ ॥

वसन्तो ग्रीष्मो वर्षाः । ( स्ते ) ते देवा ऽऋतवः शरद्धेमन्तः शिशिरस्ते पितरो य एवापूर्यतेऽर्द्धमासः स देवा योऽपक्षीयते स पितरोऽहरेव देवा रात्रिः पितरः पुनरह्नः पूर्वाह्णो देवाऽ अपराह्णः पितरः ॥ १ ॥

---

नक्षत्रत्वम् । तस्मादु सूर्यनक्षत्र एव स्यात्, एष ह्येषां वीर्यं क्षत्रमादत्त । यद्यु नक्षत्रकामः स्यात् । एतद्वा अनपराद्धं नक्षत्रं यत् सूर्यः । स एतेनैव पुण्याहेन यदेतेषां नक्षत्राणां कामयेत, तदुपेत्सेत् । तस्मादु सूर्यनक्षत्र एव स्यात् ॥ १९ ॥ इत्यग्न्याधानप्रकरणे नक्षत्रब्राह्मणम् ।

अथ ऋतुब्राह्मणम् ।

वसन्तो ग्रीष्मो वर्षाः—ते देवा ऋतवः शरद् हेमन्तः शिशिरः—ते पितरः । य एवापूर्यतेऽर्द्धमासः स देवाः । योऽपक्षीयते, स पितरः । अहरेव देवाः । रात्रिः पितरः । पुनरह्नः पूर्वाह्णो देवाः । अपराह्णः पितरः ॥ १ ॥

---

क्षत्रगुणस्यापहतत्वात्, न विद्यते क्षत्रमेषामिति व्युत्पत्त्या 'नक्षत्राणि' सम्पन्नानीत्यर्थः ।"तथा नेमानि क्षत्राणीति' यास्कः । अपाहततेजस्कत्वादिमानि क्षत्राणि न भवन्तीति नक्षत्रशब्दव्युत्पत्तिः । यस्मादेव कृत्तिकादीन्यपहतवीर्याणि, तस्मात् एव कारणात् सूर्यात्मके ' एव ' तेजस्विनि नक्षत्रे आधानं स्यात् । तत्र हेतुमाह—एष हीति । ' हि ' यस्मात् ' एषः ' सूर्यः ' एषां ' नक्षत्राणां वीर्यादिकम् ' आदत्ते', तस्मात् सवीर्ये तस्मिन्नाधानं युज्यत इत्यर्थः । यदि च यजमानः तेत्तत्पूजार्थं नक्षत्रकामः स्यात्, तदानीमपि सूर्यात्मकमेव नक्षत्रमुपाददीतेत्याह—एतद्वा इति । ' अनपराद्धम् '—इति हेतुगर्भविशेषणम् । यतस्तेजोवियोगलक्षणापराधरहितम्, अतस्तदेव सूर्यात्मकं नक्षत्रं कामयेतेत्यर्थः । तेन कृत्स्ननक्षत्रफलप्राप्तिमाह—स एतेनैवेति । ' एतेनैव ' सूर्येणोदिता पुण्यकालात्मना ' तत् ' कृत्स्ननक्षत्राधानफलं ' उपेत्सेत् ' उपगच्छेत् । उपेत्सेत्-इत्युपपूर्वक आप्नोति ( स्वा० प० २१ ) रित्यर्थः सन्नन्तः । " आप्ज्ञप्यृधामीत् " ( पा० सू० ७. ४. ५५ ) इतीत्वम् । आधानार्थमुपगन्तुमिच्छेदित्यर्थः । ' तस्मात् ' सूर्यात्मके एव नक्षत्र उदिते सत्याधानं स्यात्, न रात्रावित्यर्थः ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये

द्वितीयकाण्डे प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ (२—१—२ ) ॥

अथाधानस्य वसन्ताद्यृतुषु फलसिद्ध्यर्थं वसन्तादीनां देवपित्रात्मना द्वेधा विभागमाह—वसन्त इत्यादिना ।

---

१–" सूर्यो नक्षत्रं कालोपलक्षणं यस्य सोऽयं सूर्यनक्षत्रः । सूर्योपलक्षित एव काले आदधीत । न नक्षत्रोपलक्षित इत्यर्थः । क्व तत्सूर्यकालं लक्षयति । उदगयनम् " इत्यादि—आह हरिस्वामी । २ " तत्तस्मात् प्राप्तुयर्थं " इति पाठः । ३–' नक्षत्राणां प्राप्ति ' इति क० पा० । ४–' नक्षत्रेऽग्न्याधानफलं '—इति क० पा० ।

( स्ते ) ते वा ऽएत ऽऋतवः । ( वो ) देवाः पितरः स यो हैवं विद्वान्देवाः पितर ऽइति ह्वयत्या हास्य देवा देवहूयं गच्छन्त्या पितरः पितृहूयमवन्ति हैनं देवा देवहूयेऽवन्ति पितरः पितृहूये स ऽएवं विद्वान्देवाः पितर ऽइति ह्वयति ॥ २ ॥

स यत्रोदगावर्त्तते । देवेषु तर्हि भवति देवांस्तर्ह्यभिगोपायत्यथ यत्र दक्षिणावर्तते पितृषु तर्हि भवति पितॄंस्तर्ह्यभिगोपायति ॥ ३ ॥

स यत्रोदगावर्तते तर्ह्यग्नी ऽआदधीतापहतपाप्मानो देवा अप पाप्मानꣳ हतेऽमृता देवा नामृतत्वस्याशास्ति सर्वमायुरेति यस्तर्ह्याधत्तेऽथ यत्र दक्षिणावर्तते यस्तर्ह्याधत्तेऽनपहतपाप्मानः पितरो न पाप्मानमपहते मर्त्याः पितरः पुरा ह्यायुषो म्रियते यस्तर्ह्याधत्ते ॥ ४ ॥

---

ते वा एत ऋतवः—देवाः, पितरः । स यो हैव विद्वान् 'देवाः पितरः' इति ह्वयति—आ हास्य देवा देवहूयं गच्छन्ति, आ पितरः पितृहूयम् । अवन्ति हैनं देवा देवहूये, अवन्ति पितरः पितृहूये—य एवं विद्वान् 'देवाः, पितरः' इति ह्वयति ॥ २ ॥

स यत्रोदङ्ङावर्त्तते—देवेषु तर्हि भवति, देवांस्तर्ह्यभिगोपायति । अथ यत्र दक्षिणावर्त्तते—पितृषु तर्हि भवति, पितॄंस्तर्ह्यभिगोपायति ॥ ३ ॥

स यत्रोदङ्ङावर्त्तते, तर्ह्यग्नी आदधीत । अपहतपाप्मानो देवाः, अप पाप्मानं हते, अमृता देवाः—नामृतत्वस्याशास्ति, सर्वमायुरेति यस्तर्ह्याधत्ते । अथ यत्र दक्षिणावर्त्तते, यस्तर्ह्याधत्ते—अनपहतपाप्मानः पितरः, न पाप्मानमपहते । मर्त्याः पितरः पुरा ह्यायुषो म्रियते—यस्तर्ह्याधत्ते ॥ ४ ॥

---

वसन्ताद्यृतुत्रये देवानां सूर्यदर्शनाद्धर्मवत्त्वेन तेषां तादात्म्यम्, शरदादीनां तद्वैलक्षण्यात् पितृरूपत्वम् । य एवाभूवन्—इत्यादि । निगदसिद्धम् ॥ १ ॥

ते वा एत ऋतव इति । स यो हैव विद्वानित्यादि । एवमृतूनां देवत्वं पितृत्वं च 'स' 'विद्वान्' तान् ऋतून् 'देवाः पितरः' 'इति' 'ह्वयति' व्यवहरतीत्यर्थः । तस्य फलमाह—आ हास्येति । 'अस्य' आह्वातुः 'देवहूयं' देवाह्वानं प्रति देवा 'आगच्छन्ति' तथा 'पितृहूयं' पैतृकमाह्वानं प्रति पितरोऽप्यागच्छन्ति आगताश्च तं स्वसम्बद्धे कर्मणि 'एनम्' आह्वातारम् 'अवन्ति' इत्यर्थः ॥ २ ॥

आधानस्योत्तरायणकाले विहितत्वात् तयोरयनयोर्देवपितृसम्बन्धं कथयति—स यत्रेति । 'स' सूर्यो यस्मिन् काले दक्षिणगोलादुत्तरगोलं प्रति 'उदङ्' 'पर्यावर्त्तते', 'तर्हि' तदा, तस्मिन् समये मेरोरुत्तरभागेऽवस्थितानां देवानां स दृग्गोचरो भवतीति तेषु उदङ् 'देवेषु' प्रकाशको भवतीति । 'अथ' 'यत्र' यस्मिन् काले पुनरुत्तरगोलाद् दक्षिणगोलं पर्यावर्त्तते, तदा दक्षिणदिगवस्थितस्य पितृलोकस्य प्रकाशकः सन् तेषु 'पितृषु' भवति ॥ ३ ॥

एवमुत्तरायणे दक्षिणायने च देवपितृसम्बन्धमभिधाय, तत्सम्बद्धमाधानमपि तत्रैव कार्यमिति विधत्ते—स

---

१-'तस्मात्' इति क० पा० । २-'पर्यावर्त्ते' इ० क० पा० ।

ब्रह्मैव व्वसन्तः क्षत्रं ग्रीष्मो व्विडेव व्वर्षास्तस्माद्ब्राह्मणो व्वसन्त ऽआदधीत ब्रह्म हि व्वसन्तस्तस्मात्क्षत्रियो ग्रीष्म ऽआदधीत क्षत्रꣳ हि ग्रीष्मस्तस्माद्वैश्यो व्वर्षास्वादधीत विड्ढि व्वर्षाः ॥ ५ ॥

स यः कामयेत । ब्रह्मव्वर्चसी स्यामिति व्वसन्ते स आदधीत ब्रह्म वै व्वसन्तो ब्रह्मवर्चसी हैव भवति ॥ ६ ॥

( त्व ) अथ यः कामयेत । क्षत्रꣳ श्रिया यशसा स्यामिति ग्रीष्मे स ऽआदधीत क्षत्रं वै ग्रीष्मः क्षत्रꣳ हैव श्रिया यशसा भवति ॥ ७ ॥

( त्व ) अथ यः कामयेत । बहुः प्रजया पशुभिः स्यामिति व्वर्षासु स ऽआदधीत व्विड्वै व्वर्षा अन्नं व्विशो बहुर्हैव प्रजया पशुभिर्भवति य एवं व्विद्वान्वर्षास्वाधत्ते ॥ ८ ॥

---

ब्रह्मैव वसन्तः, क्षत्रं ग्रीष्मो, विडेव वर्षाः । तस्माद् ब्राह्मणो वसन्त आदधीत, ब्रह्म हि वसन्तः । तस्मात् क्षत्रियो ग्रीष्म आदधीत, क्षत्रं हि ग्रीष्मः । तस्माद् वैश्यो वर्षास्वादधीत, विड्ढि वर्षाः ॥ ५ ॥

स यः कामयेत–' ब्रह्मवर्चसी स्याम् ' इति, वसन्ते स आदधीत । ब्रह्म वै वसन्तो, ब्रह्मवर्चसी हैव भवति ॥ ६ ॥

अथ यः कामयेत–' क्षत्रं श्रिया, यशसा स्याम् ' इति, ग्रीष्मे स आदधीत । क्षत्रं वै ग्रीष्मः क्षत्रं हैव श्रिया यशसा भवति ॥ ७ ॥

अथ यः कामयेत–'बहुः प्रजया पशुभिः स्याम्' इति, वर्षासु स आदधीत । विड् वै वर्षाः, अन्नं विशः । बहुर्हैव प्रजया पशुभिर्भवति–य एवं विद्वान् वर्षास्वाधत्ते ॥ ८ ॥

---

यन्नेवेति । तदेतत् प्रशंसति–अपहतपाप्मान इति । देवाना पापराहित्यान्मरणधर्मराहित्याच्च तत्सम्बन्धिन्यग्नेऽभ्याधानकारिणोऽपि तदुभयं सिद्ध्यतीत्यर्थः । दक्षिणायन आधानुक्तवैपरीत्यमाह–अथ यन्नेति ॥ ४ ॥

एवमुदगयन विधाय तत्रापि ब्रह्मक्षत्रादिवर्णानुसारेण ऋतुव्यवस्था करोति–ब्रह्मैव वसन्त इत्यादिना । वसन्ताद्या ऋतवः क्रमात् ब्रह्मक्षत्राद्यात्मकाः, अतस्तेषां क्रमेण तत्तज्जात्याधानकालत्वम् ॥ ५ ॥

एवं नित्यपक्षमभिधाय काम्यपक्षमाह–स य इति । ब्रह्मवर्चसी हैवेति । ब्राह्मणजात्यात्मके वसन्त आधानात् क्षत्रियादिरपि ब्राह्मणतेजस्सम्पन्नो भवतीत्यर्थः । एवमुत्तरत्रापि योज्यम् ॥ ६ ॥

अथ यः कामयेतेति । क्षत्रं श्रियेति । क्षत्रियजातेरपि ' श्रिया ' सम्पदा कीर्त्या च क्षत्रात्मकः स्यामिति कामयमानस्य ब्राह्मणादेः ग्रीष्म आधानकाल इत्यर्थः ॥ ७ ॥

अथ यः कामयेतेति । बहुप्रजापश्वादिसमृद्धिकामस्य वैश्यस्यापि तत्फलप्राप्त्यै वर्षास्वाधानं सम्पद्यत इत्यर्थः ॥ ८ ॥

---

१–" वसन्तो ब्राह्मणब्रह्मवर्चसकामयोः " का० श्रौ० सू० ४. १७९ । २–" ग्रीष्मः क्षत्रिययशस्कामयोः " का० श्रौ० सू० ४ । १८० । ३–" वर्षाः प्रजापशुकामवैश्यरथकाराणाम् " का० श्रौ० सू० ४ । १८१ ।

ते वा॒ऽ ए॒त ऽऋ॒तवः॑ । ( ऽ ) उ॒भय॑ ऽए॒वाप॑हतपाप्मानः॒ सूर्य॑ ऽए॒वैषां॑ पा॒प्मनो॑ऽपह॒न्तोद्य॑न्ने॒वैषा॑मु॒भये॑षां पा॒प्मान॑मप॒हन्ति॒ तस्मा॒द्य॑दे॒वैनं॒ कदा॑ च य॒ज्ञ ऽउ॑प॒नमे॒दथा॒ग्नी ऽआद॑धीत॒ न श्वःश्व॒मुपा॑सीत॒ को हि म॑नु॒ष्य॑स्य॒ श्वो वे॑द ॥ ९ ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ( १।३ )॥

यदह॑रस्य॒ श्वोऽग्न्या॒धेय॑ᳬं॒ स्यात् । ( ह्रि ) दि॒वैवा॒श्नीया॒न्मनो॑ ह॒ वै दे॒वा म॑नु॒ष्य॑स्याजानन्ति॒ तेऽस्यै॒तच्छ्वो॑ऽग्न्याधे॒यं वि॑दु॒स्तेऽस्य॒ विश्वे॑ दे॒वा गृ॒हा-नाग॑च्छन्ति॒ तेऽस्य॑ गृ॒हेषू॑पवस॒न्ति स उ॑प॒वस॑थः ॥ १ ॥

---

ते वा एत ऋतवः—उभय एवापहतपाप्मानः । सूर्य एवैषां पाप्मनोऽपहन्ता । उद्यन्नेवैषामुभयेषां पाप्मानमपहन्ति । तस्माद्—यदेवैनं कदा च यज्ञ उपनमेत्, अथाग्नी आदधीत । न श्वःश्वमुपासीत । को हि मनुष्यस्य श्वो वेद ॥ ९ ॥ इत्यग्न्याधानप्रकरणे तृतीयमृतुब्राह्मणम् ॥

अथ उपवसथब्राह्मणम् ।

यदहरस्य श्वोऽग्न्याधेयं स्यात्, दिवैवाश्नीयात् । मनो ह वै देवा मनुष्यस्याजानन्ति । तेऽस्यैतच्छ्वो अन्याधेयं विदुः । तेऽस्य विश्वे देवा गृहानागच्छन्ति । तेऽस्य गृहेषूपवसन्ति—स उपवसथः ॥ १ ॥

---

एवमयनविशेषमृतुविशेषं चाभिधाय पक्षान्तरं च वक्तुं सर्वेषामप्यृतूनां पापसम्बन्धराहित्यमाह—ते वा एत इति । उभय एवेति । देवपितृसम्बन्धितया द्विधा प्रतिपादिता एवेत्यर्थः । पापराहित्ये कारणमाह—सूर्य एवेति । यस्मादेव सर्वेऽप्यृतवः पापराहित्येन शुद्धाः, 'तस्मात्' यस्मिन् कस्मिंश्चिदृतौ सोमयागमभिगच्छेत्, 'अथ' अनन्तरमेवाग्न्याधानं कुर्यात् । न श्वःश्वमुपासीतेति । 'श्वः श्वः करवाणि' इत्येवं कालान्तरप्रतीक्षी न कुर्यात् । तत्र हेतुमाह—को हीति । 'मनुष्यस्य' 'श्वः' कालसम्बन्धि जीवनं 'कः' नाम 'वेद' जानीयात् ? आयुषोऽस्थिरत्वादित्यर्थः ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ १ । ३ ॥

---

अग्न्याधेयदिवसात् पूर्वस्मिन् उपवसथदिवसे कर्तव्यं व्रतमुपदिशति—यदहरस्येति । 'दिवैव' इत्येवकारेण रात्रावशनं व्यावर्त्यते । "मनो ह वै देवा"—इत्यादि दर्शपूर्णमासिकप्रस्तावे प्रागेव ( श. प. १ । १ । १ । ७ । ८ ) व्याख्यानम् ॥ १ ॥

---

१–" शिशिरं सार्ववर्णिकं "—इत्येव च पाठान्तरम् । २–' प्रतीक्षा न कार्या ' इति पा ।

( स्तु ) तुन्वेवानवक्लृप्तं यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्तस्मादु दिवैवाश्नीयात्तदपि काममेव नक्तमश्नीयान्नो ह्यनाहिताग्निर्व्रतचार्यस्ति मानुषो ह्येवस तावद्भवति यावदनाहिताग्निस्तस्मादपि काममेव नक्तमश्नीयात् ॥ २ ॥

( त्त ) तद्वेकेऽजमुपबध्नन्ति । ( न्त्या ) आग्नेयोऽजोऽग्नेरेव सर्वत्वायेति वदन्तस्तदु तथा न कुर्यादग्रयस्यानः स्यादग्नीधऽएवैनं प्रातर्दद्यात्तेनैव ते काममाप्नोति तस्मादु तन्नाद्रियेत ॥ ३ ॥

( त्रा ) अथ चातुष्प्राश्यमोदनं पचन्ति छन्दांस्यनेन प्रीणीम इति यथा येन वाहनेन स्यन्त्स्यन्त्स्यात्तत्सुहितं कुर्यादेवमेतदिति वदन्त-

---

तन्वेवानवक्लृप्तम्—यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयात्, अथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्; तस्मादु दिवैवाश्नीयात् । तदपि काममेव नक्तमश्नीयात् । नो ह्यनाहिताग्निर्व्रतचार्यस्ति, मानुषो ह्येव स तावद् भवति—यावदनाहिताग्निः तस्मादपि काममेव नक्तमश्नीयात् ॥ २ ॥

तद्वैकेऽजमुपबध्नन्ति—' आग्नेयोऽजोऽग्नेरेव सर्वत्वाय ' इति वदन्तः । तदु तथा न कुर्यात् । यद्यस्यानः स्यात्, अग्नीध एवैनं प्रातर्दद्यात्, तेनैव तं काममाप्नोति; तस्मादु तन्नाद्रियेत ॥ ३ ॥

अथ चातुष्प्राश्यमोदनं पचन्ति—'छन्दांस्यनेन प्रीणीम' इति । यथा येन वाहनेन स्यन्स्यन् स्यात्,

---

दिवैव भोजनं न रात्राविति प्रतिज्ञाय पक्षान्तरमाह—तन्वेवेति । तदपीति । ' तत् ' तत्र विषये ' कामं ' यथेच्छं रात्रावपि ' अश्नीयात् ' । तत्र कारणमाह—नो ह्यनाहिताग्निरिति । ' न ' खलु ' अनाहिताग्निः ' व्रतचारी ' अस्ति '; तस्मात्पुरुषमात्रत्वात्, आहिताग्निर्हि संस्कारेण देवत्वं प्राप्नोति । अतस्तत्कर्माऽर्हतीति भावः ॥ २ ॥

तद्वैक इति । अजमुपबध्नन्तीति । उपवसथदिवसस्य रात्रौ गार्हपत्यागारे कस्यचिदजस्य बन्धनं कार्यमित्येकेषां मतम् । तेषामभिप्रायमाह—आग्नेयोऽज इति । अग्निना सह प्रजापतिमुखजत्वात् ' अजः आग्नेयः ', अतोऽजस्य सम्बन्धनादग्नेरपि ' सर्वत्वाय ' कात्स्र्न्याय सम्पद्यते, ' इति ' एतदभिप्रायं वदन्त इत्यर्थः । तदेतन्निरस्यति—तदु तथा नेति । कथं तर्हि कर्तव्यमिति, तदाह—यद्यस्येति । ' अस्य ' यजमानस्य ' अजः ' विद्यते चेत्, ' एनम् ' अजम् ' प्रातः ' अन्वाहार्यदक्षिणाकाले ' अग्नीधे ' आग्नीध्राय ' दद्यात् ' तथा च कात्यायनः—" गार्हपत्यागारेऽजं बध्नाति न वा निबध्नतं प्रातराग्नीध्राय दद्यात् " ( का. श्रौ. सू. ४-१९७ ) —इति । तेनैवेत्यादि । निगदसिद्धम् ॥ ३ ॥

चरुनिर्वापस्यैव पक्षान्तरमेवं दूषयन्नेषां प्रतिपादयति—अथ चातुष्प्राश्यमोदनमिति । चतुर्भिर्ऋत्विग्भिः-

---

१-" यथा हैतदेव यत्र प्रवर्त्स्यन्ति, स पुरस्ताद्गार्हपत्यं निर्विष्टं तदर्धैरदन्तिदज्जम, मनसे छन्दांसि स्वन्तां छन्दांसि ब्राह्मणो मनुष्य भाजनः पशूनं, तस्मात्सुहुत्वा सुवर्त्मं हन्यमान "—इति तै० सं० ५. १. २. ४. ।

दहात्रौदनं पचात्र माᳲसं पचेति स यं तममुरा न्युदधत तेनानेन मनुष्या भुञ्जते ॥ १३ ॥

( तेऽथै ) अथैनं देवाः । (ऽ) अन्तरात्मन्नादधत त ऽइममृतमन्तरात्मन्नाधायामृता भूत्वाऽस्तर्या भूत्वा स्तर्यान्त्सपत्नान्मर्त्यानभ्यभवंस्तथो ऽएवैष एतदमृतमन्तरात्मन्नाधत्ते नामृतत्वस्याशास्ति सर्वमायुरेत्यस्तर्यो हैव भवति न हैनᳲ सपत्नस्तुस्तूर्षमाणश्चन स्तृणुते तस्माद्यश्चाहिताग्निश्चानाहिताग्निश्च स्पर्द्धेतेऽआहिताग्निरेवाभिभवत्यस्तर्यो हि खलु स तर्हि भवत्यमृतः ॥ १४ ॥

( स्त ) तद्यत्रैनमदो मन्थन्ति । तज्जातमभि प्राणिति प्राणो वा ऽअग्निर्जातमेवैनमेतत्सन्तं जनयति स पुनरपानिति तदेनमन्तरात्मन्नाधत्ते सो-ऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १५ ॥

तमुद्दीप्य समिन्धे । (न्धऽ) इह यक्ष्यऽइह सुकृतं करिष्यामीत्येवैनमेतत्समिन्धे सोऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १६ ॥

---

अथैनं देवा अन्तरात्मन्नादधत । त इममृतमन्तरात्मन्नाधाय, अमृता भूत्वा, अस्तर्या भूत्वाः स्तर्यान् सपत्नान्मर्त्यानभ्यभवन् । तथो एवैष एतदमृतमन्तरात्मन्नाधत्ते । नामृतत्वस्याशास्ति, सर्वमायुरेति; अस्तर्यो हैव भवति । न हैनं सपत्नस्तुस्तूर्षमाणश्चन स्तृणुते । तस्माद्—यदाहिताग्निश्चानाहिताग्निश्च स्पर्द्धेते, आहिताग्निरेवाभिभवति । अस्तर्यो हि खलु स तर्हि भवत्यमृतः ॥१४॥

तद्यत्रैनमदो मन्थति, तज्जातमभिप्राणिति । प्राणो वा अग्निः, जातमेवैनमेतत्सन्तं जनयति । स पुनरपानिति । तदेनमन्तरात्मन्नाधत्ते । सोऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १५ ॥

तमुद्दीप्य समिन्धे । इह यक्ष्ये, इह सुकृतं करिष्यामि, इत्येवैनमेतत्समिन्धे । सोऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १६ ॥

---

मद्दे । ' तृणानि दह ' इत्याद्यनुवाक्यम् । हे अग्ने ! अत्र पृथिव्याम् ' तृणानि दह, दारूणि दह ' इत्येवमग्निं प्रेषयन्तो भूमौ तमस्थापयन्, यच्चाहितवन्तोऽसुरास्तेनाग्निनाऽमुना मर्त्या भुञ्जते ॥ १३ ॥

अथैनमित्यादि । ' देवाः ' ' तु ' ' एनम् ' अग्निम् ' आत्मन् ' आत्मनि, ' अन्तः ' हृदयमध्ये ' आधाय ' यथान्तरुपमहपते यथ ।

आत्मानिकानिदमर्थं प्रश्ने योजयति—तथो एवैष इति । अस्तर्यो हीति । अमृतस्याग्नेर्धारणेन यस्मादाहिताग्निर्हिंस्य, तस्माद् विद्यमानोऽप्यनाहिताग्निमभिभवितु शक्नोतीत्यर्थः ॥ १४ ॥

नन्वग्निगार्हपत्यादावधने बहिराधीयते, कथं तस्यान्तरात्मगामिति, तत्राह—तद्यत्रेति । अभिप्राणितीति । मन्थनात् ' जातम् ' ' तम् ' अग्निम् ' अभि ' उपरि प्राणनं करोति । स पुनरपानितीति । अधोदेशात् श्वासमुत्सृज्य तमेव श्वासं पुनरन्तर्नयेत् । तेन सार्धमग्निरप्यन्तः प्रविशन् यजमानस्य हृदये आहितो भवतीत्यर्थः ॥ १५ ॥

निरुदस्याग्नेरुद्दीपनसमिन्धने विधत्ते—तमिति । उद्दीपनं काष्ठप्रक्षेपः, समिन्धनं सम्यक् प्रज्वलनम्,

अन्तरेणागाद्व्यवृतदिति । न ह वाऽअस्यैतं कश्चनान्तरेणैति यावज्जीवति योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति तस्मादु तन्नाद्रियेत यदनुगच्छेन्न ह वाऽअस्यैषोऽनुगच्छति यावज्जीवति योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १७ ॥

ते वाऽएते प्राणा ऽएव यदग्नयः । प्राणोदानावेवाहवनीयश्च गार्हपत्यश्च व्यानोऽन्वाहार्यपचनः ॥ १८ ॥

तस्य वाऽएतस्याग्न्याधेयस्य । सत्यमेवोपचारः स यः सत्यं वदति यथाऽग्निꣳ समिद्धं तं घृतेनाभिषिञ्चेदेवꣳ हैनꣳ स उद्दीपयति तस्य भूयो-

अन्तरेणागाद् व्यवृतदिति । न ह वा अस्यैतं कश्चनान्तरेणैति, यावज्जीवति; योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति । तस्मादु तं नाद्रियेत, यदनुगच्छेत् । न ह वा अस्यैषोऽनुगच्छति, यावज्जीवति; योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १७ ॥

ते वा एते प्राणा एव, यदग्नयः । प्राणोदानावेव, आहवनीयश्च गार्हपत्यश्च । व्यानोऽन्वाहार्यपचनः ॥ १८ ॥

आहिताग्नेर्व्रतब्राह्मणम् ।

तस्य वा एतस्याग्न्याधेयस्य सत्यमेवोपचारः । स यः सत्यं वदति, यथा–अग्निं समिद्धं तं घृतेनाभिषिञ्चेत्, एवं हैनं स उद्दीपयति । तस्य भूयो भूय एव तेजो भवति, श्वः श्वः श्रेयान् भवति । अथ

तदुभयमन्तरग्नौ दर्शयति–इहेति । 'इह' अस्मिन् वाद्येऽग्नौ 'यक्ष्ये' यागं करिष्ये, तत्फलं च सम्पादयिष्यामीति यो मनोव्यापारो सङ्कल्पो, तेनैवान्तराहितस्याग्नेरुद्दीपनसमिन्धने इत्यर्थः । योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवतीत्युपसंहारः ॥ १६ ॥

एवमन्तरग्निमास्थानस्य व्यवायादिदोषोऽपि नास्तीति प्रतिपादयति–अन्तरेणेत्यादिना । अग्नियजमानयोर्मध्ये देवदत्तादेरागतेन च व्यवायादिभिः 'व्यवृतत्' व्यावृतो विमुखो भवेदिति यो दोषः, सोऽप्यत्र नास्ति । तत्र हेतुमाह–न ह वा इति । न खलु हृदयमध्ये स्थापितस्याग्नेर्यजमानस्य च मध्ये कोऽपि गच्छति यावज्जीवन्; अतो व्यवायशङ्का न कार्येति । एवं विदुषोऽग्न्यनुगमनशङ्कापि न कार्येत्याह–तस्मादिति । न ह वा अस्येति । बाह्यस्याग्नेरनुगमेऽपि अन्तराहितस्याग्नेर्यावज्जीवमवस्थानात्, न खल्वस्य यजमानस्यैषोऽग्निरनुगच्छन्नुपशाम्यति ॥ १७ ॥

नन्वन्तर्गार्हपत्यादयोऽग्नयो न सन्ति, कथं तेषामनुगम इत्यत आह–ते वा इति । गार्हपत्यादीनां प्राणोदानव्यानात्मनाऽवस्थितत्वात् नोक्तदोष इत्यर्थः ॥ १८ ॥

आहिताग्निना सत्यमेव वदितव्यम्, न कदाचिदप्यनृतमित्युभयं प्रतिपादयति–तस्य वेत्यादिना ॥ १९ ॥

१–' तदुभयमान्तरेऽग्नौ ' इति क्व. पा. । २–" अनृताभिष्यपनोदपूतिदायीं वर्जयेत्तदतहृदकानि वर्जयेत् " का० श्रौ० सू० ४. १५७ ।

# अथ द्वितीयाध्याये तृतीयं ब्राह्मणम्, द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।



वरुणो हैनद्राज्यकाम ऽआदधे । स राज्यमगच्छत्तस्माद्यश्च वेद यश्च न वरुणो राजेत्येवाहुः सोमो यशस्कामः स यशोऽभवत्तस्माद्यश्च सोमे लभते यश्च नोभावेवागच्छतो यशऽएवैतद् द्रष्टुमागच्छन्ति यशो ह भवति राज्यं गच्छति य ऽएवं विद्वानाधत्ते ॥१॥

( तेऽग्नौ ) अग्नौ ह वै देवाः । सर्वाणि रूपाणि निदधिरे यानि च ग्राम्याणि यानि चारण्यानि विजयं वोपप्रेप्स्यन्तः कामचारस्य वा कामाय यं नो गोपिष्ठो गोपायदिति वा ॥ २ ॥

तान्यु हाग्निर्निचकमे । तैः सङ्गृह्यर्तून्प्रविवेश पुनरेम इति देवा एतदग्निं तिरोभूतं तेषा ह हेयुपेसवास किमिह कर्तव्यं केह प्रज्ञेति वा ॥ ३॥

---

अथ पुनराधानम् ।

वरुणो हैनद् राज्यकाम आदधे । स राज्यमागच्छत् । तस्माद्यश्च वेद, यश्च नः वरुणो राजेत्येवाहुः। सोमो यशस्कामः । स यशोऽभवत् । तस्माद्यश्च सोमे लभते, यश्च नः उभावेवागच्छतः यश एवैतद् द्रष्टुमागच्छन्ति । यशो ह भवति, राज्यं गच्छति–य एवं विद्वानाधत्ते ॥ १ ॥

अग्नौ ह वै देवाः सर्वाणि रूपाणि निदधिरे । यानि च ग्राम्याणि, यानि चारण्यानि, विजयं वोपप्रेप्स्यन्तः, कामचारस्य वा कामाय, अयं नो गोपिष्ठो गोपायदिति वा ॥ २ ॥

तान्यु हाग्निर्निचकमे । तैः सङ्गृह्यर्तून् प्रविवेश । पुनरेम इति देवा एतदग्निं तिरोभूतम् । तेषां ह हेयुपेसवास–किमिह कर्तव्यम् ? केह प्रज्ञेति ? वा ॥ ३ ॥

---

अथ पुनराधेयं विधित्सुः स्तुत्यर्थं यज्ञानुष्ठानपूर्वकं तदाख्यायिकया प्रशंसति–वरुण इति । सोमो यशस्काम इति । आदधे इत्यनुषङ्गः उत्तमर्थं प्रकृते योजयति–यशो हेति । ' यशः ' यशस्वी भवतीत्यर्थः ॥ १ ॥

पुनराधेयं विधातुमाख्यायिकया प्रस्तौति–अग्नौ हेति । निधाने कारणानि विकल्पयति प्रेप्स्यन्तः–विजयं वेति । असुरान् विजेतुमुपगमनसमये पूर्वनिर्दिष्टान्याधानस्यार्थमर्थनिधानमित्येकः पक्षः । ' कामचारस्य ' कामाय यथेष्टं क्रीडितुम्, सञ्चरणस्य यः कामः तदर्थं वा तन्निधानमिति द्वितीयः । भूयः एव स्थितानां ' नः ' अस्माकं देवानां मध्येऽयमग्निः ' गोपिष्ठः ' गोपायितृतमो रक्षणकुशलोऽस्मदीयं धनं ' गोपायत् ' रक्षितुं शक्नोतीत्यनेनाभिप्रायेण वा तन्निधानमिति तृतीयः पक्षः ॥ २ ॥

तान्यु हेत्यादि । ' तानि ' देवैर्निहितानि ' ग्राम्यारण्यानि ' रूपाणि सः ' अग्निः ' नितरां कामितवान्,

---

१–"पुनराधेयमाधानप्रतिज्ञानस्य" का० श्रौ० सू० ४।२५५। २–"प्रतनिभूतम्" इति क० पा। ३–"पश्चतीरा"–इति क० पा०। ४–" राज्ययशस्कामस्य वा " का० श्रौ० सू० ४। २६०। ५–' एतदाहुः ' इति क० पा० । ६–' पुनराधेयविधानार्थमाख्यायिका ' इति क० पा० । ७–' पूर्वसिद्धस्याधानस्य क्षेमार्थं निधान– ' इति क० पा० । ८–' गोपायितुम् ' इति क० पा० ।

तत ऽएतत्त्वष्टा पुनराधेयं ददर्श । तदादधे तेनाग्नेः प्रियं धामोपजगाम सोऽस्माऽउभयानि रूपाणि प्रतिनिःससर्ज यानि च ग्राम्याणि यानि चारण्यानि तस्मादाहुस्त्वाष्ट्राणि वै रूपाणीति त्वष्टुर्ह्येव सर्वꣳ रूपमुप ह त्वेवान्याः प्रजा यावच्छो यावच्छ इव तिष्ठन्ते ॥ ४ ॥

तस्मै कं पुनराधेयमादधीत । ( तै ) एवꣳ हैवाग्नेः प्रियं धामोपगच्छति सोऽस्माऽउभयानि रूपाणि प्रतिनिःसृजति यानि च ग्राम्याणि यानि चारण्यानि तस्मिन्नेतान्युभयानि रूपाणि दृश्यन्ते परमता वै सा स्पृहयन्त्यु हास्मै तथा पुष्यति लोक्यम्वेवापि ॥ ५ ॥

---

तत एतत् त्वष्टा पुनराधेयं ददर्श । तदादधे तेनाग्नेः प्रियं धामोपजगाम । सोऽस्मा उभयानि रूपाणि प्रतिनिःससर्ज—यानि च ग्राम्याणि, यानि चारण्यानि । तस्मादाहुस्त्वाष्ट्राणि वै रूपाणीति । त्वष्टुर्ह्येव सर्वं रूपम् । उप ह त्वेवान्याः प्रजा यावच्छो यावच्छः इव तिष्ठन्ते ॥ ४ ॥

तस्मै कं पुनराधेयमादधीत । एवं हैवाग्नेः प्रियं धामोपगच्छति । सोऽस्मा उभयानि रूपाणि प्रतिनिःसृजति—यानि च ग्राम्याणि, यानि चारण्यानि । तस्मिन्नेतान्युभयानि रूपाणि दृश्यन्ते । परमता वै सा । स्पृहयन्त्यु हास्मै तथा पुष्यति लोक्यम्वेवापि ॥ ५ ॥

---

अह मेवेमम् सर्वमुपमोक्ष्ये इति । 'ते' विक्षेपे सह विद्यमानं सर्वं सङ्गृह्य अन्तर्धानात् 'अभूत्' चोरादिः पर्वतमिव प्रविष्टवान् । देवा अप्यग्नेरपि स्थानं 'पुनः' 'एमः' आगच्छाम । 'इति' अनेनाभिप्रायेण ते 'तिरोभूतम्' 'अग्निम्' अगच्छन् । पूर्वं यस्मिन्स्थाने सोऽग्निः स्थितः, तत्र तमपश्यता 'तेषाम्' देवानाम् 'स्वर्गो इव आस विहीनावस्था प्राप । अग्निरप्यग्नेरपि सर्वं धनमपहृत्य गतः, 'इह' अस्मिन् विषये 'किम्' अस्माभिः 'कर्तव्यम्' ? 'का वा' बुद्धिः ? 'इति' ॥ ३ ॥

तत एतदिति । एवं विचारयतां मध्ये 'ततः' अनन्तरमेव 'त्वष्टा' 'एतद्' वक्ष्यमाणं 'पुनराधेयम्' 'ददर्श' । तदादधे इत्यादि । निगदसिद्धम् । उप ह त्वेवेति । 'उप ह तु एव' । 'यावच्छ' 'यावत्प्रकारविशिष्टं स्वाङ्गं रूपम्' 'अन्या प्रजा' 'उपतिष्ठन्ते,' तावन्तो जायन्त इत्यर्थः । वीप्सा तु सर्वसङ्ग्रहार्था ॥ ४ ॥

तस्मा इति । पुनराधेयविधिः । यदाम्नायविधया प्रतिपन्नं प्रयोजनम्, अग्निप्रियधामोपगमनादिलक्षणम्, तदर्थं पुनराधानं कुर्यादित्यर्थः । प्रथमस्माहितस्याग्नेः विघातान्तरेण पुनरन्ये व्यापन्नेषु व्यापन्नं पुनराधेयम् । एवं हैवादि । निगदसिद्धम् । परमता वै सेति । येयं ग्राम्यारण्योभयप्राप्तिः 'सा' 'परमता' परमेव सर्वोत्कृष्टत्वम् । किञ्च 'अस्मै' पुनराधेयं कृतवते सर्वे जना 'स्पृहयन्ति' आद्रियन्ते । "स्पृहेरीप्सितः"—( पा०

---

१– मनाक्ष्मे 'अन्तदधे' इति क्वचित्पुस्तकयो, 'अनन्तरम्' इति च क० पुस्तकेऽधिकमुपलभ्यते । २–'आगच्छाम' इति क० । ३–'देवानामग्निविहीनावस्था प्राप' 'देवानां विहीनावस्था प्राप' इति च क० । ४–'इदमा' विभेति इति हरिस्वामिमत । प्रथमकाण्डप्रयुक्त तत. इत्यस्मृत्याऽव्ययानन्तरम् कन्त्वादिषु पठ्यते इति २.१.२.१.१४ इत्यत्र भाष्ये १, तदनुसारं 'दृश्यते' 'इदमा' 'इयत्ता' इतीनं व्यपि रूपाणि एकानुजाभि समनार्थेऽपि च । इतीदं सरत्र (१० क ) 'दृश्यन्त' इति च विवेच्यम् । ५–यावच्छो यावच्छ ▓ । येयच्छब्दे उपचार । अपमन्यत्रैवम् ॥ इति हरिस्वामी ॥

( प्या ) आग्नेयोऽयं यज्ञः । ज्योतिराग्निः पाप्मनो दग्धा सोऽस्य पाप्मानं दहति स इह ज्योतिरेव श्रिया यशसा भवति ज्योतिरमुत्र पुण्यलोकत्वैतत्तु तद्यस्मादादधीत ॥ ६ ॥

स वै वर्षास्वादधीत । वर्षा वै सर्व्वऽऋतवो वर्षा हि वै सर्व्वऽऋतवो-ऽयादो वर्षमकुर्मादो वर्षमकुर्मेति संवत्सरान्त्सम्पश्यन्ति वर्षा ह त्वेव सर्व्वेषामृतूनाꣳ रूपमुत हि तद्वर्षासु भवति यदाहुर्ग्रीष्मऽइव वाऽअद्येत्यु-तो तद्वर्षासु भवति यदाहुः शिशिरऽइव वाऽअद्येति वर्षाद्विद्वर्षाः ॥ ७ ॥

( ऽ ) अथैतदेव परोऽक्षꣳ रूपम् । यदेव पुरस्ताद्वाति तद्वसन्तस्य रूपं यत्स्तनयति तद्ग्रीष्मस्य यद्वर्षति तद्वर्षाणां यद्विद्योतते तच्छरदो यद्वृष्ट्वोद्ग्र-

---

आग्नेयोऽयं यज्ञः । ज्योतिरग्निः पाप्मनो दग्धा । सोऽस्य पाप्मानं दहति । स इह ज्योतिरेव श्रिया यशसा भवति । ज्योतिरमुत्र पुण्यलोकत्वा । एतत्तु तद्-यस्मादादधीत ॥ ६ ॥

स वै वर्षास्वादधीत । वर्षा वै सर्वे ऋतवः । वर्षा हि वै सर्वे ऋतवः-अयादो वर्षमकुर्म, अदो वर्षमकुर्मेति संवत्सरान् संपश्यन्ति । वर्षा ह त्वेव सर्वेषामृतूनां रूपम्, उत हि तद्वर्षासु भवति । यदाहुः-ग्रीष्म इव वा अद्येति । उतो तद् वर्षासु भवति । यदाहुः-शिशिर इव वा अद्येति । वर्षाद्विद्वर्षाः ॥७॥

अथैतदेव परोक्षं रूपम् । यदेव पुरस्ताद्वाति, तद्वसन्तस्य रूपम् । यत्स्तनयति, तद् ग्रीष्मस्य ।

---

सू० १. ४. २६. ) इति सम्प्रदानसञ्ज्ञा । तथा अयमपि ' लोक्यम् ' लोकनीयमुत्कर्षं प्राप्य ' पुष्यति ' प्रवृद्धो भवति ॥ ५ ॥

विहितं पुनराधेयमग्निसम्बन्धोपवर्णनेन प्रशंसति-आग्नेयोऽयं यज्ञ इति । ज्योतिरात्मको ह्यग्निः ' पाप्मनः ' ' दग्धा ' दाहकः । अतः ' सः ' अग्नि. स्वसम्बन्धियज्ञं कुर्वत. ' अस्य । पापं निर्दहति । एतत्तु तदिति । यस्मै फलाय आदधीत ' एतत् ' उक्तविधिफलं खलु ' तत् ' इत्यर्थः ॥ ६ ॥

तस्य पुनराधेयस्य त्रैवर्णिकसाधारण्येन ऋतुविशेषं विधत्ते-स वा इति । ऋत्वन्तरं परित्यज्य वर्षर्तुविधाने कारणमाह- वर्षा वा इति । एतदुपपादयति-वर्षा हि वा इत्यादिना । यस्मादेवं वर्षर्तुः सर्वात्मकः, तस्मात् समुदायात्मकं संवत्सरं वर्षशब्देन लोको व्यवहरतीति दर्शयति-अयेति । सर्वर्तुरूपा वर्षा इति प्रतिपादयितुं प्रतिजानीते-वर्षा ह त्वेवेति । एतदुपपादयति-तदिति । ग्रीष्मशिशिरधर्मयोः प्रकाशशैत्ययो , वर्षासु महो-वायुवृष्टियोगाच्च वर्षर्तोस्तावदृतुत्रयात्मकत्वम् । तत्र ग्रीष्मे वसन्तस्य, वर्षासु शरदः, शिशिरे हेमन्तस्य, समान-धर्मतयाऽन्तर्भावात् सर्वर्तुरूपत्व सिद्धमित्यर्थः ॥ ७ ॥

एवं प्रत्यक्षविषयं प्रकाशादिधर्मयोगेन सर्वत्वमभिधाय परोक्षमप्यवशादपि तद् प्रतिपादयति-अथैतदिति ।

---

१-' एतदुक्तविधं खलु श्रीयशो ज्योतिश्च युष्मकं एतत्तु तदित्यर्थः । ' अमुत्र ' अमुष्मिंल्लोके पुण्यलोकत्वेन ज्योतिरेतदाधाने भवेत् । इतीदृक् पाठः क्वचित्पुस्तक उपलभ्यते । २-" वर्षासु मध्यंदिने वा " का० श्रौ० सू० ४. २६४. । ३-" वर्षास्वेव विधाने " इति [illegible] । ४-' सद्भावात्, वर्षर्तोपाच वर्षर्तोस्तावदृतुमयात्मकत्वम् ' इति क. पा. । ५-' तत् ' इति क. पा. ।

ह्राति तद्धेमन्तस्य वर्षाः सर्व्वंऽऋतव ऋतून्प्राविशत्तेभ्य एवैनमेतन्नि-र्मिमीते ॥ ८ ॥

(तऽ) आदित्यस्त्वेव सर्व्वंऽऋतवः । (वो) यदैवोदेत्यथ वसन्तो यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ वर्षा यदाऽपराह्णोऽथ शरद्यदैवास्तमेत्यथ हेमन्तस्तस्मादु मध्यन्दिनऽएवादधीत तर्हि ह्येषोऽस्य लोकस्य नेदिष्ठं भवति तन्नेदिष्ठादेवैनमेतन्मध्यान्निर्मिमीते ॥ ९ ॥

छाययेव वाऽअयं पुरुषः । पाप्मनानुषक्तः सोऽस्यात्र कनिष्ठो भवत्यधस्पदमिवेयस्यते तत्कनिष्ठमेवैतत्पाप्मानमवबाधते तस्मादु मध्यन्दिनऽएवादधीत ॥ १० ॥

---

यद्वर्षति, तद्वर्षाणाम् । यद् विद्योतते, तच्छरदः । यद् वृष्टोद्गृह्णाति, तद्धेमन्तस्य । वर्षाः सर्वे ऋतवः । ऋतून् प्राविशत्, ऋतुभ्य एवैनमेतन्निर्मिमीते ॥ ८ ॥

आदित्यस्त्वेव सर्वे ऋतवः । यदैवोदेति—अथ वसन्तः । यदा सङ्गवः । अथ ग्रीष्मः । यदा मध्यन्दिनः—अथ वर्षाः । यदापराह्णः—अथ शरत् । यदैवास्तमेति—अथ हेमन्तः । तस्मादु मध्यन्दिन एवादधीत तर्ह्येषोऽस्य लोकस्य नेदिष्ठं भवति, तन्नेदिष्ठादेवैनमेतन्मध्यान्निर्मिमीते ॥ ९ ॥

छाययेव वा अयं पुरुषः पाप्मनानुषक्तः । सोऽस्यात्र कनिष्ठो भवति—अधस्पदमिवेयस्यते । तत् कनिष्ठमेवैतत्पाप्मानमवबाधते । तस्मादु मध्यन्दिन एवादधीत ॥ १० ॥

---

शुद्धेनोदको हि वसन्तादीनां परोक्षभूतो धर्मः । तेषां च सर्वेषां वर्षासु सद्भावात् सर्वर्तुरूपत्वं वर्षे । ऋतून् प्राविशदित्यादि । यस्मादग्निः प्रागुक्तरीत्या ऋतून् प्राविशत्, तस्मादेव वर्षाख्याधानमेभ्य एवर्तुभ्य पुनराधानमित्यर्थः ॥ ८ ॥

तत्र पुनराधानमर्हति मध्यन्दिने कार्यमिति विधित्सुस्तदर्थमादित्यस्य सर्वर्तुरूपतामाह—आदित्यस्त्वेवेति । अत्र सङ्गवस्याहस्त्रिमुहूर्तात्मकः अह्नोऽवयवः सूर्योदयादारभ्य प्रथमे । तत्र वर्षाख्यानस्य विहितत्वात् तदात्मकं मध्यन्दिन एव तत् कुर्यादित्यर्थः । तदेतन्मध्यन्दिनाधानं प्रशंसति—तर्हीति । 'तर्हि' तस्मिन् मध्यन्दिने समये 'एष' आदित्य 'अस्य लोकस्य' 'नेदिष्ठम्' अन्तिकतमो 'भवति' । सिद्धमन्यत् ॥ ९ ॥

प्रकारान्तरेण तन्मध्यन्दिनाधानं प्रशंसति—छाययेवेति । सोऽस्येति । 'अस्य' पुरुषस्य छायारूपः 'स' पाप्मा 'अत्र' अस्मिन् मध्यन्दिने 'कनिष्ठः' अल्पतमः 'भवति' । स च पाप्मा पुरुषस्य पादयोरधस्तादिव 'ईयस्यते' प्रवर्तते । "ईयुं गतौ"—( धा. पा. भ्वा. प. ३६ ) इति धातुः । तत् कनिष्ठमित्यादि सुगमम् ॥ १० ॥

---

१—'तस्य च हि' इति क पु पा. । २—"सर्वेषु मध्यन्दिने" का० श्रौ० सू० ४. २६४ । ३—'पुनराधानम्' इति क. । ४—[illegible] । ५—'ईयते' इति क्वचित्पुस्तके ।

तं वै दर्भैरुद्धरति । दारुभिर्वै पूर्वमुद्धरति दारुभिः पूर्वं दारुभिरुपरं जामि कुर्यात्समदं कुर्यादापो दर्भा ऽआपो वर्षा ऽऋतून्प्राविशदद्भिरे-वैनमेतदृतुभ्यो निर्मिमीते तस्माद्दर्भैरुद्धरति ॥ ११ ॥

( त्य ) अर्कपलाशाभ्याम् । व्रीहियवमयपूपं कृत्वा यत्र गार्हपत्यमा-धास्यन्भवति तन्निदधाति तद्गार्हपत्यमादधाति ॥ १२ ॥

( त्य ) अर्कपलाशाभ्याम् । यवमयमपूपं कृत्वा यत्राहवनीयमाधास्य-न्भवति तन्निदधाति तदाहवनीयमादधाति पूर्वाभ्यामेवैनावेतदग्निभ्याम-न्तर्दध्म इति वदन्तस्तदु तथा न कुर्याद्रात्रिभिर्ह्येवान्तर्हितौ भवतः ॥ १३ ॥

तं वै दर्भैरुद्धरति । दारुभिर्वै पूर्वमुद्धरति । दारुभिः पूर्वम्, दारुभिरपरम्; जामि कुर्यात्, समदं कुर्यात्, आपो दर्भाः, आपो वर्षाः, ऋतून् प्राविशत् । अद्भिरेवैनमेतदृतुभ्यो निर्मिमीते । तस्माद्दर्भै-रुद्धरति ॥ ११ ॥

अर्कपलाशाभ्यां व्रीहिमयमपूपं कृत्वा यत्र गार्हपत्यमाधास्यन् भवति, तन्निदधाति, तद्गु गार्हपत्य-मादधाति ॥ १२ ॥

अर्कपलाशाभ्यां यवमयमपूपं कृत्वा यत्राहवनीयमाधास्यन् भवति, तन्निदधाति: तदाहवनीयमा-दधाति । पूर्वाभ्यामेवैनावेतदग्निभ्यामन्तर्दध्म इति वदन्तः । तद्गु तथा न कुर्यात्–रात्रिभिर्ह्येवान्त-र्हितौ भवतः ॥ १३ ॥

तस्य पुनरग्नितस्याग्नेर्दर्भैरेवोद्धरणं कार्यमिति विधत्ते–तं वा इति । आधानवत् पुनराधानेऽपि दारुभि-रुद्धरणे दोषमाह–दारुभिः पूर्वमिति । उभयोरेकरूप्ये जामितादोषः स्यात् । तथा ' समदम् ' दारुभिर्वा परस्परं तयोः कलहमपि जनयेदित्यर्थः । विहितं दर्भैरुद्धरणं प्रशंसति–आप इति । दर्भाणामप्विकारत्वं प्रथम-काण्डे प्रतिपादितम्–" ता उपर्युपर्यतिपुप्लुविरेऽत इमे दर्भाः "–इति ( श. प. १।१।३।५ ) ॥ ११ ॥

व्रीहियवमययोरपूपयोरर्कपर्णद्वयाद्गृहीतयोर्गार्हपत्याहवनीयायतनयोर्निधानं विधत्ते–अर्कपलाशाभ्यामि-त्यादिना । अत एवोक्तं कात्यायनेन–" वर्षासु मध्यन्दिने वा " " कुशैराधानम् " " व्रीह्यपूपमर्कपलाशयोः पक्वं गार्हपत्यस्य स्थाने निदधात्येवमाहवनीयस्य यावम् " ( का० श्रौ० सू० ४. २६४–२६६ ) इति ॥ १२ ॥

अपूपनिधानस्य प्रयोजनमाह–पूर्वाभ्यामिति । पूर्वमाहितौ यौ गार्हपत्याहवनीयौ ताभ्यामित्यर्थः । तदेत-न्निषेधति–तद्गु तथेति । रात्रिभिर्ह्येवेति । अनुगतयोरग्न्योः रात्रिभिरेव व्यवधानात् । नापूपव्यवधानेन प्रयोजनमित्यर्थः ॥ १३ ॥

१–" कुशैराधानम् " का० श्रौ० सू० ४. २६६ । २–" व्रीह्यपूपमर्कपलाशयोः पक्वं गार्हपत्यस्थाने निदधात्येवमाहवनीयस्य यावम्, एवमन्ये " का. श्रौ. सू. ४. २६६ ।

( तऽ ) आग्नेयमेव पञ्चकपालं पुरोडाशं निर्वपति । तस्य पञ्चपदाः पङ्क्तयो याज्यानुवाक्या भवन्ति पञ्च वा ऋतव ऽऋतून्प्राविशदृतुभ्य ऽएवैनमेतान्निर्मिमीते ॥ १४ ॥

सर्वऽ आग्नेयो भवति । ( त्ये ) एवथं हि त्वष्टाग्नेः प्रियं धामोपागच्छत्त-स्मात्सर्वऽआग्नेयो भवति ॥ १५ ॥

तेनोपांशु चरन्ति । यद्वै ज्ञातये वा सख्ये वा निष्केवल्यं चिकीर्षति तिरऽइवैतेन बोभवद्वैश्वदेवोन्यो यज्ञोऽथैष निष्केवल्य ऽआग्नेयो यद्वै तिर-ऽइव तदुपांशु तस्मादुपांशु चरन्ति ॥ १६ ॥

( न्त्यु ) उच्चैरुत्तममनुयाजं यजति । कृतकर्मेव हि स तर्हि भवति सर्वो हि कृतमनुबुध्यते ॥ १७ ॥

---

आग्नेयमेव पञ्चकपालं पुरोडाशं निर्वपति । तस्य पञ्चपदाः पङ्क्तयो याज्यानुवाक्या भवन्ति । पञ्च वा ऋतवः ऋतून् प्राविशत् । ऋतुभ्य एवैनमेतान्निर्मिमीते ॥ १४ ॥

सर्व आग्नेयो भवति । एवं हि त्वष्टाग्नेः प्रियं धामोपागच्छत् । तस्मात् सर्व आग्नेयो भवति ॥१५॥

तेनोपांशु चरन्ति । यद्वै ज्ञातये वा सख्ये वा निष्केवल्यं चिकीर्षति, तिर इवैतेन बोभवत् । वैश्व-देवोऽन्यो यज्ञः अथैष निष्केवल्य आग्नेयः । यद्वै तिर इव, तदुपांशु । तस्मादुपांशु चरन्ति ॥ १६ ॥

उच्चैरुत्तममनुयाजं यजति । कृतकर्मेव हि स तर्हि भवति । सर्वो हि कृतमनुबुध्यते ॥ १७ ॥

---

आग्नेयमेवेति । यदोऽन्याधेये पवमानेष्टिकार्यम्, तदाग्नेय एव पञ्चकपाल करोतीति न पृथक्तया कर्तव्या इत्येवकारार्थ ॥ १४ ॥

सर्व आग्नेयो भवतीति । अस्या पञ्चकपालेष्ट्याज्यभागादि सर्वोऽपि यागोऽग्निदेवत्य कार्य इत्यर्थ ॥१५॥

तेनोपांशु चरन्तीति । विहितमुपांशुत्वमुपपादयति—ज्ञातये वेति । 'यद्' खलु 'निष्केवल्यम्' इत-रेभ्यो निष्कृष्य केवलम्, तदेकभाग चिकीर्षति, कर्तुमिच्छति । 'एतेन' 'तिर इव' 'बोभवद्' भवति, तिरोहित परोक्षमेव तत् प्रदीयत इत्यर्थ । यद्वै तिर इवेति । 'यत्' खलु तिरोहितमिव भवति, तत् 'उपांशु' भवति । उपांशूच्चार्यमाणस्यापि परश्रोत्रग्राह्यत्वाभावेन तिरोहितत्वादित्यर्थ ॥ १६ ॥

उच्चैरुत्तममनुयाजं करोतीति । यावत् 'उत्तम' तृतीयोऽनुयाज, तावत्पर्यन्तमुपांशुस्वर, तत ऊर्द्ध्वं मुच्चैरेव मन्त्रप्रयोग इत्यर्थ । तत्र कारणमाह—कृतकर्मेवेति ॥ १७ ॥

---

१—"यदाऽन्याधेयपवमानेष्टिकार्यम् तदाग्नेय एव (पञ्च) कपाल करोति" इति क पा । २—"आग्नेय पञ्चकपाल यथा ऽ॥ प्रागुत्तमादनुयाजात्" "पङ्क्त्या" का श्रौ सू ४।२६७।२६८ ॥ ३—तिरोहितवत् 'उपांशु' इति क.।

स्विष्टीव खलु वा एष तद्दुग्धासितो भवति सम्बोधयत्येवैनमेतत्समुद्दीपयति जुषाणो अग्निराज्यस्य वेत्विति यजति ॥ २१ ॥

( स्थ ) अथ यद्यग्नये पवमानाय म्रियेरन् । ( ब्र ) अग्नये पवमानायानुब्रूहीति ब्रूयात्सोऽन्वाहाग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनामिति तथाहाग्नेयो भवति सोमो वै पवमानस्तदु सौम्यादाज्यभागान्नयन्ति जुषाणोऽअग्निः पवमान आज्यस्य वेत्विति यजति २२॥

( स्थ ) अथ यद्यग्नय इन्दुमते म्रियेरन् । ( ब्र ) अग्नय इन्दुमतेऽनुब्रूहीति ब्रूयात्सोऽन्वाहेहेदु स्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इन्दुभिरिति तथाहाग्नेयो भवति सोमो वा इन्दुस्तदु सौम्यादाज्यभागान्नयन्ति जुषाणोऽअग्निरिन्दुमानाज्यस्य वेत्विति यजत्येतदु सर्वमाग्नेयं करोति ॥ २३ ॥

---

ध्वानो अमर्त्यम् । हव्या देवेषु नो दधत् "—इति ( ऋ. सं. मं. ५ सू. १४. ऋ. १ । वा. सं. अ. २२ मं. १५ ) स्विष्टीव खलु वा एतद् यद्दुग्धासितो भवति । सम्बोधयत्येवैनमेतत्समुद्दीपयति—" जुषाणो अग्निराज्यस्य वेतु "—इति यजति ॥ २१ ॥

अथ यद्यग्नये पवमानाय म्रियेरन्—" अग्नये पवमानायानुब्रूहि " इति ब्रूयात् । सोऽन्वाह—" अग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् "—( वा. सं. अ. १९ मं. ३८ ) इति । तथाहाग्नेयो भवति । सोमो वै पवमानः । तदु सौम्यादाज्यभागान्नयन्ति—" जुषाणोऽग्निः पवमान आज्यस्य वेतु "—इति यजति ॥ २२ ॥

अथ यद्यग्नय इन्दुमते म्रियेरन्—" अग्नय इन्दुमतेऽनुब्रूहीति ब्रूयात् । सोऽन्वाह—" इहेदु स्रवाणि तेऽग्न इत्थेतरा गिरः । एभिर्वर्धास इन्दुभिः "—इति ( वा. सं. अ. २६ मं. १३ ) तथाहाग्नेयो भवति । सोमो वा इन्दुः । तदु सौम्यादाज्यभागान्नयन्ति—" जुषाणो अग्निरिन्दुमानाज्यस्य वेतु "—इति यजति । एतदु सर्वमाग्नेयं करोति ॥ २३ ॥

---

तस्या पुनराधेयत्वकल्पमाह—स्विष्टीवेति । ' समुद्दीपयति ' सम्यक्प्रज्वलयतीत्यर्थः ॥ २१ ॥

द्वितीयाग्निनाशस्य प्रायश्चित्तमदृष्टं दर्शयन्ति—अथ यद्यग्नये इत्यादिना । निगदसिद्धोऽर्थः ॥ २२ ॥

अथ यद्यग्नय इति । एतदु सर्वमेवेति । एतदुक्ताभ्यां प्रायश्चित्ताभ्यामग्नेरेव सम्बन्धकरणात् तत् सर्वमाग्नेयं भवतीत्यर्थः ॥ २३ ॥

( त्सु ) अयाहाग्नयेऽनुब्रूहीति हविषः । ( योऽग्नि ) अग्निं यजाग्नये स्विष्टकृतेऽनुब्रूह्यग्निꣳ स्विष्टकृतं यजेत्यथ यद्देवान्यजेत्यग्नीन्यजेत्येवैतदाह ॥२४॥

स यजति । ( त्य ) अग्नेर्व्वसुवने व्वसुधेयस्य व्वेतु व्वौषडग्ना३ उ व्वसुवने व्वसुधेयस्य व्वेतु व्वौषड्देवोऽअग्निः स्विष्टकृदिति स्वयमाग्नेयस्तृतीय ऽएवम्वाग्नेयाननुयाजान्करोति ॥ २५ ॥

ता वाऽएताः । षड्विभक्तीर्यजति चतस्रः प्रयाजेषु द्वेऽअनुयाजेषु षड्वाऽऋतव ऽऋतून्प्राविशद्दतुभ्य एवैनमेतान्निर्म्मिमीते ॥ २६ ॥

द्वादश वा त्रयोदश वाऽक्षराणि भवन्ति । द्वादश वा वै त्रयोदश वा संव्वत्सरस्य मासाः संव्वत्सरमृतून्प्राविशद्दतुभ्य एवैनमेतत्संव्वत्सरान्निर्म्मिमीते न द्वे चन सहाजामितायै जामि ह कुर्य्याद्यद्द्वे चित्सह स्यातां व्यन्तु व्वेत्वित्येव प्रयाजानाꣳ रूपं व्वसुवने व्वसुधेयस्येत्यनुयाजानाम् ॥ २७ ॥

---

अयाह-" अग्नयेऽनुब्रूहि " इति " हविषोऽग्निं यज " " अग्नये स्विष्टकृतेऽनुब्रूहि " " अग्निं स्विष्टकृतं यज '' इति । अथ यद् " देवान् यज "-इति । अग्नीन् यजेत्येवैतदाह ॥ २४ ॥

स यजति-"अग्नेर्वसुवने वसुधेयस्य वेतु वौषक् अग्ना उ वसुवने वसुधेयस्य वेतु वौषक् देवो अग्निः स्विष्टकृत-" इति स्वयमाग्नेयस्तृतीयः एवं वा आग्नेयाननुयाजान् करोति २५

ता वा एताः षड् विभक्तीर्यजति । चतस्रः प्रयाजेषु, द्वे अनुयाजेषु । षड् वा ऋतवः । ऋतून् प्राविशत् । ऋतुभ्य एवैनमेतन्निर्मिमीते ॥ २६ ॥

द्वादश वा त्रयोदश वा अक्षराणि भवन्ति । द्वादश वा वै त्रयोदश वा सम्वत्सरस्य मासाः । सम्वत्सरमृतून् प्राविशत् । ऋतुभ्य एवैनमेतत् सम्वत्सरान्निर्मिमीते । न द्वे चन सहाजामितायै । जामि ह कुर्याद्-यद् द्वे चित् सह स्याताम् । " व्यन्तु वेतु"-इत्येव प्रयाजानां रूपम् । " वसुवने वसुधेयस्य "-इत्यनुयाजानाम् ॥ २७ ॥

---

अथानन्विष्टकृतोऽग्न्याग्निसम्बन्ध इति दर्शयति-अयाहाग्नय इति । प्रथमप्रयाजवत् प्रथमानुयाजेऽपि ' देवान् यज "-इत्यस्य स्थाने " अग्नीन् यज "-इत्यग्निविभक्तिः कार्या ॥ २४ ॥

तथा द्वितीयेऽप्यनुयाजे " अग्ना उ "-इति विभक्तिः प्रयोक्तव्येति प्रतिपादयति-स यजतीत्यादिना । स्वयमाग्नेय इति ' तृतीयः ' त्वनुयाजः ' स्वयमाग्नेय स्वयमेवाग्निशब्दवानिति न पृथक् तत्राग्निविभक्तिः प्रक्षेप्तव्येत्यर्थः ॥ २५ ॥

एवं प्रयाजानुयाजेषु प्रक्षिप्ताः सम्भूयानूद्य प्रशंसति-ता वा इति ॥ २६ ॥

तासां विभक्तीनामक्षरसङ्ख्यामुपजीव्य प्रशंसति-द्वादश वेति । ' अग्ना उ '-इत्यत्रानिमाक्षरत्यागे सति

---

१-" प्रयाजस्विष्टकृतोऽग्न्येव सम्बन्ध स्थान-सम्बन्ध इति दर्शयति " इति क०पु० "अधुना स्विष्टकृतोऽप्याग्निसम्बन्ध इति" इति-च क० पु० पा० ॥ २-का० श्रौ० सू० ४।११। ॥ ।द्रष्टव्यम् ।

तस्य हिरण्यं दक्षिणा । ( षा॒म्ने ) आग्नेयो वाऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणानड्वान्वा स हि वहेनाग्नेयोऽग्निदग्धमिव ह्यस्य वहं भवति देवानाᳪं हव्यवाहनोऽग्निरिति वहति वा ऽएष मनुष्येभ्यस्तस्मादनड्वान्दक्षिणा ॥ २८ ॥

इति द्वितीयेऽध्याये तृतीयं ब्राह्मणम् । ( २ । ३ )

प्रजापतिर्ह वा ऽइदमग्र ऽएक ऽएवास स ऐक्षत कथं नु प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत सोऽग्निमेव मुखाज्जनयाञ्चक्रे तद्यदेनं मुखादजनयत तस्मादन्नादोऽग्निः स यो हैवमेतमग्निमन्नादं वेदान्नादो हैव भवति ॥ १ ॥

---

तस्य हिरण्य दक्षिणा । आग्नेयो वा एष यज्ञो भवति, अग्ने रेतो हिरण्यम्, तस्माद्धिरण्यं दक्षिणा । अनड्वान्वा । स हि वहेनाग्नेयः । अग्निदग्धमिव ह्यस्य वह भवति । देवाना हव्यवाहनोऽग्निरिति । वहति वा एष मनुष्येभ्यः । तस्मादनड्वान् दक्षिणा ॥ २८ ॥ इति पुनराधेयविधिः सम्पूर्णः ।

इत्याधानब्राह्मणं समाप्तम् ।

अथाग्निहोत्रब्राह्मणम् ।

प्रजापतिर्ह वा इदमग्र एक एवास । स ऐक्षत–“ कथं नु प्रजायेय” इति । सोऽश्राम्यत्, स तपोऽतप्यत सोऽग्निमेव मुखाज्जनयाञ्चक्रे । तद् यदेनं मुखादजनयत–तस्मादन्नादोऽग्निः । स यो हैवमेतमग्निमन्नाद वेद, अन्नादो ह भवति ॥ १ ॥

---

द्वादशाक्षराणि भवन्ति, तेन सह त्रयोदश भवन्तीत्यर्थः । न द्वे चनेति । चनेशब्दोऽप्यर्थः । ‘ द्वे ’ अपि वक्ष्यमाणे ‘ न ’ ‘ सह ’ प्रयुञ्जीत, किमर्थम् ? ‘ अनाभिमानै ’ जामितादोषराहित्याय । व्यतिरेके तु तद्भावमाह–जामि हेति । क पुनस्ते द्वे ? इति तु विभज्य दर्शयति–त्वमग्ने–वेत्यित्यादिना ॥ २७ ॥

पुनराधेयस्य दक्षिणा विधत्ते–तस्येति । स हि वहेनेति । स खल्वनड्वान् ‘ वहेन ’ स्कन्धेनाग्निसम्बद्धो भवति । तस्योपपातम्–अग्निदग्धमिवेति । अनडुहश्च साम्यमाह–देवानामिति । अतो वहनसाम्यात् पुनराधीयमानस्याग्ने ‘ अनड्वान् दक्षिणा ’ उत्कृष्टेत्यर्थः ॥ २८ ॥ १ [ २ ३ ] ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ २–२–३ ॥

एवमाधानपुनराधाने विधाय तन्निष्पन्नानामग्नीनां फलवत्कर्मार्थत्वात् तत्साध्य सायम्प्रातरनुष्ठेयमग्निहोत्राख्यं कर्म विधिमुपदर्शयितुमाख्यायिकामाह–प्रजापतिर्हवा इत्यादिना ॥ १ ॥

---

१ ‘ वसोकल्प ॥ चिकन ’ इति आपस्तम्ब ३ । ४ । ३ । २–“ हिरण्यं दक्षिणाऽनड्वान् वाग्न्येयिकीर्थेच्छन्ति ” का. श्रौ. सू. ४ २५१ । ३ प्रथमकाण्डस्य अ. १ ब्रा. २ क. ६ द्रष्टव्या । ४–‘ वहन स्यात् । ’ इति क. पा. । ५– तत्राधनपशुप्रसङ्गम् ’ इति क. पा. ।

स ह॑नं नाभिराधयाञ्चकार । केशमिश्रेव हास तां व्यौषदोषं धयेति तत ओषधयः समभवंस्तस्मादोषधयो नाम स द्वितीयमुदमृष्ट ततोऽपरामाहुतिं विवेद घृताहुतिं वैव पयआहुतिं वोभयᳬं ह त्वेव तत्पय एव ॥ ५ ॥

स ह॑नमभिराधयाञ्चकार । स व्यचिकित्सज्जुहवानी३ मा हौषा३मिति तᳬं स्वो महिमाभ्युवाद जुहुधीति स प्रजापतिर्विदाञ्चकार स्वो वै मा महिमाहेति स स्वाहेत्येवाजुहोत्तस्मादु स्वाहेत्येव हूयते तत एष उदियाय य एष तपति ततोऽयं प्रवभौ योऽयं पवते तत एवाग्निः पराङ् पर्यावर्त ॥ ६ ॥

---

सा हैनं नाभिराधयाञ्चकार । केशमिश्रेव हास । तां व्यौषत्—ओष धयेति । तत ओषधयः समभवन्—तस्मादोषधयो नाम । स द्वितीयमुदमृष्ट । ततोऽपरामाहुतिं विवेद, घृताहुतिं वैव पयआहुतिं वा—उभयं ह त्वेव तत्पय एव ॥ ५ ॥

सा हैनमभिराधयाञ्चकार । स व्यचिकित्सत्—जुहवानी ३ मा हौषा ३ मिति । तं स्वो महिमाऽभ्युवाद—जुहुधीति । स प्रजापतिः विदाञ्चकार—स्वो वै मा महिमाऽऽहेति । स स्वाहेत्येवाजुहोत्—तस्मादु स्वाहेत्येव हूयते । तत एष उदियाय—य एष तपति । ततोऽयं प्रवभौ—योऽयं पवते । तत एवाग्निः पराङ् पर्यावर्त ॥ ६ ॥

---

'आत्मनि' स्वशरीरे 'एव' आहुतिद्रव्यसम्पादनेच्छया कृतवान् । हस्तौ च '■' 'उदमृष्ट' हस्ताभ्यां स्वाङ्गस्योन्मार्जनं कृतवान् । यस्मादेव तस्मादेव कारणात् इदम् इदं च उभयमपि पाणितलम् 'अलोमकं' रोमरहितं दृश्यते । तमाजनन 'तत्राहुतिं' 'विवेद' लेभे । तां विशिनष्टि—घृताहुतिमिति । उभयं हेति । यदेतत् पयोघृतलक्षणमाहुतिद्वयम् 'तत् उभयम्' अपि 'पय एव' घृतस्य पयोविकारत्वादित्यर्थः ॥ ४ ॥

सा हैनमित्यादि । 'नाभिराधयाञ्चकार' अभिप्रेतं तृप्तं न चकारेत्यर्थः । तत्र हेतुः—केशमिश्रेवेति । केशमिश्रितत्वादाहुतिर्न तृप्तिम्, प्रत्युत बीभत्सामेव जनयति । अत प्रजापतिस्तामाहुतिं इयमाहुतिर्दोषेण नाग्नौ हितेयम् । 'तां' वह्निं तस्मिन्नग्नौ 'व्यौषत्' अदहत् इत्यादुरितिस्यात् 'ओष' एक कला 'धय' पिब 'इति' । एवमसौ प्रक्षिप्तवान् तस्मात् 'ओषधयः' पृथिव्यां समभवन् । एवमेव पयस्य इत्यस्योपनिमुक्ता प्रातराहुतिदेवताना सूर्यस्योपस्थितिर्—स द्वितीयामिति । पूर्ववद् योज्यम् ॥ ५ ॥

सा हैनमित्यादि । स व्यचिकित्सदिति । अस्यां द्वितीयस्यामाहुतौ स प्रजापतिः विचिकित्सां कृतवान्, किमिदं मन्त्रज्ञानेन उत्स्य जुहवानि, किं वा नेति । एवं संशयानम् अभिलक्ष्य प्रजापतिर्नामा स्वकीयः स्वकीयो 'महिमा' 'अभ्युवाद' अभितः प्रोक्तवान्,—'संशयं मा कार्षीः, होमं कुरु' इति । स्वो वा इति । यस्मात् 'स्वो महिमा आह, तस्मात् 'स' प्रजापतिः 'स्वाहेत्येव तत्' इत्यमजुहोत् । तत एष इति । तस्मा-द्धोमात् 'एष' सूर्य उदितः उत्पन्नो बभूव । पवमानो वायुरपि तत एवोत्पन्नः । एवमनन्तरोऽग्निरपि सर्वतो अग्निरपि प्रदक्षिणाद्यभिमुखात् पराङ् पर्यावृत्तो बभूवेत्यर्थः ॥ ६ ॥

स हुत्वा प्रजापतिः । प्र चाजायतात्त्यतश्चाग्नेर्मृत्योरात्मानमत्रायत स यो हैवं विद्वानग्निहोत्रं जुहोत्येताᳩं हैव प्रजातिं प्रजायते यां प्रजापतिः प्राजायतैवमु हैवात्त्यतोऽग्नेर्मृत्योरात्मानं त्रायते ॥ ७ ॥

स यत्र म्रियते । यत्रैनमग्नावभ्यादधति तदेषोऽग्नेरधिजायतेऽथास्य शरीरमेवाग्निर्दहति तद्यथा पितुर्वा मातुर्वा जायेतैवमेषोऽग्नेरधिजायते शश्वद्ध वा एष न सम्भवति योऽग्निहोत्रं न जुहोति तस्माद्वा अग्निहोत्रᳩं होतव्यम् ॥ ८ ॥

तद्वा एतत् । (दे) एव विचिकित्सायै जन्म यत्प्रजापतिर्व्यचिकित्सत्स विचिकित्सञ्छ्रेयस्यम्रियत यः प्र चाजायतात्त्यतश्चाग्नेर्मृत्योरात्मानमत्रायत स यो हैवमेतद्विचिकित्सायै जन्म वेद यद्ध किं च विचिकित्सति श्रेयसि हैव म्रियते ॥ ९ ॥

स हुत्वा न्यमृष्ट । ततो विकङ्कतः समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो

---

स हुत्वा प्रजापतिः प्र चाजायत, अत्त्यतश्चाग्नेर्मृत्योरात्मानमत्रायत । स यो हैवं विद्वानग्निहोत्रं जुहोति—एतां हैव प्रजातिं प्रजायते—यां प्रजापतिः प्राजायत । एवमु हैवात्त्यतोऽग्नेर्मृत्योरात्मानं त्रायते ॥ ७ ॥

स यत्र म्रियते, यत्रैनमग्नावभ्यादधति—तदेषोऽग्नेरधिजायते । अथास्य शरीरमेवाग्निर्दहति । तद्यथा पितुर्वा मातुर्वा जायेत, एवमेषोऽग्नेरधिजायते । शश्वद्ध वा एष न सम्भवति—योऽग्निहोत्रं न जुहोति—तस्माद्वा अग्निहोत्रं होतव्यम् ॥ ८ ॥

तद्वा एतदेव विचिकित्सायै जन्म—यत् प्रजापतिर्व्यचिकित्सत् । स विचिकित्सञ्छ्रेयस्यम्रियत—यः प्र चाजायत, अत्त्यतश्चाग्नेर्मृत्योरात्मानमत्रायत । स यो हैवमेतद्विचिकित्सायै जन्म वेद—यद्ध किञ्च विचिकित्सति, श्रेयसि हैव म्रियते ॥ ९ ॥

स हुत्वा न्यमृष्ट-ततो विकङ्कतः समभवत् । तस्मादेषः, यज्ञियो य. . . ो ह्यसः । तत एते

---

स हुत्वेत्यादि । यस्मादेवं प्रजापतिराहुत्या मृत्योदिलक्षणां प्रजामुत्पादयत् ' . . . न. ' मत्तृणः कारिष्यतः ' अग्नेः ' ' आत्मानम् ' ' अत्रायत ' । तस्माद् विद्वुषोऽप्येवं भवतीत्याह—स य इति ॥ ७ ॥

स यत्र म्रियत इति । अग्निहोत्रहोमं कुर्वन् देहावसाने ' अग्नौ ' प्रक्षिप्तः मातापितृशरीरादिव तस्मादग्नेः सकाशात् दिव्यशरीरोऽभिनव उत्पद्यते । यस्त्वग्निहोत्रं न जुहोति, स त्वेवं नोत्पद्यत इत्यर्थः ॥ ८ ॥

तद्वा एतदित्यादि । विचिकित्सापुरस्सराहुत्यनुष्ठानेन प्रजापतेः श्रेयःप्राप्तिर्जाता, ' एवंविद् ' इदानीन्तनोऽपि यजमानो विमर्शपूर्वकानुष्ठानेन श्रेयः प्राप्नोतीत्यर्थः ॥ ९ ॥

अग्निहोत्रहवणी स्रुक् विकङ्कतवृक्षेण निर्मातव्येत्यभिप्रेत्य तस्योत्पत्तिमाह—स हुत्वेति । प्रागुक्तमग्निवायुसूर्याणां

---

१—" वैकङ्कत ( ? ) अग्निहोत्रहवणी ( ? ) पाणिना सम्मार्ष्टि " इति का. श्रौ. सू. ४ । ३३१ ।

वृक्षस्तत एते देवानां वीरा अजायन्ताग्निर्योऽयं पवते सूर्यः स यो हैवमे-
तान्देवानां वीरान्वेदाहास्य वीरो जायते ॥ १० ॥

तऽउ हैतऽऊचुः । (वी) वयं वै प्रजापतिं पितरमनु स्मो हन्त वयं तत्सृ-
जामहै यदस्मानन्वसदिति ते परिश्रित्य गायत्रेणापहिङ्कारेण तुष्टुविरे तद्य-
त्पर्यश्रयन्त्स समुद्रोऽथेयमेव पृथिव्या स्तावः ॥ ११ ॥

( स्ते ) ते स्तुत्वा प्राञ्च ऽउच्चक्रमुः । पुनरेम ऽइति देवा एताᳪं सम्भू-
ताᳪं सा हैनानुदीक्ष्य हिङ्चकार ते देवा विदाञ्चक्रुरेष साम्नो हिङ्कार
ऽइत्यपहिङ्कारᳪं हैव पुरा ततः सामास स ऽएष गवि साम्नो हिङ्कारस्त-
स्मादेषोपजीवनीयोपजीवनीयो ह वै भवति य ऽएवमेतं गवि साम्नो
हिङ्कारं वेद ॥ १२ ॥

ते होचुः । ( भं ) भद्रं वा ऽइदमजीजनामहि ये गामजीजनामहि यज्ञो ह्ये-
वेयं नो ह्यृते गोर्यज्ञस्तायतेऽन्नᳪं ह्येवेयं यद्धि किञ्चान्नं गौरेव तदिति॥१३॥

---

देवाना वीरा अजायन्त—अग्निः, योऽयं पवते, सूर्यः । स यो हैवमेतान् देवाना वीरान् वेद—आहास्य वीरो जायते ॥ १० ॥

त उ हैत ऊचुः—वय वै प्रजापति पितरमनु स्मः, हन्त वय तत् सृजामहै—यदस्मानन्वसदिति । ते परिश्रित्य गायत्रेणापहिङ्कारेण तुष्टुविरे । तद् यत्पर्यश्रयन् स समुद्रः । अथेयमेव पृथिव्या स्तावः ॥ ११

ते स्तुत्वा प्राञ्च उच्चक्रमुः—पुनरेम इति देवा एतां सम्भूताम् । सा हैनानुदीक्ष्य हिंचकार । ते देवाः विदाञ्चक्रुः 'एष साम्नो हिङ्कारः' इति । अपहिङ्कार हैव पुरा ततः सामास । स एष गवि साम्नो हिङ्कारः—तस्मादेषोपजीवनीया । उपजीवनीयो ह वै भवति—य एवमेत गवि साम्नो हिङ्कारं वेद ॥ १२ ॥

ते होचुः—भद्रं वा इदमजीजनामहि—ये गामजीजनामहि यज्ञो ह्येवेयम्, नो ऋते गोर्यज्ञस्तायते । अन्न ह्येवेयम्, यद्धि कि [illegible] —गौरेव तदिति ॥ १३ ॥

---

ज म अनूप, तद्वेदनप [illegible] त एत इति । देवाना मध्ये 'वीरा' प्रबला इत्यर्थः ॥ १० ॥

अथ होमद्रव्यस्य प [illegible] त्ति वक्तु प्रथमतो गोरुत्पत्तिमाह—त उ हेति । यथाऽस्मदीय पिता प्रजापतिः अस्मान् सृष्टवान् 'वय' 'तम् अनु' 'स्म' भवाम 'यत्' यत्र 'अस्मान्' 'अनु' अनन्तरम् 'असद्' भवेत् जायेत, 'तत् वय सृजामहै' एव प्रतिज्ञाय गा सम्भृत्य हिङ्कारवर्जितेन गायत्रसाम्ना बहिष्पवमानेन 'तुष्टुविरे' स्तुतवन्तः । 'तस्य' स्तोत्रदेशस्य 'यत्' परिश्रयणं 'स समुद्र' अभवत् यश्च 'स्ताव' स्तोत्रदेशः, सा 'पृथिवी' जातेत्यर्थः ॥ ११ ॥

ते स्तुत्वेति । पुनरेम इति । पुनरागच्छाम इति स्तोत्रदेशात् प्रागुत्क्रम्य तस्मात् स्तोत्रात् 'सम्भूतां गां ते देवा' प्राप्नुवन्नित्यर्थः । सा हैनानित्यादि निगदसिद्धम् ॥ १२ ॥

ते होचुरित्यादि । 'भद्रम्' उत्कृष्ट खलु 'इदम्' 'अजीजनामहि' अजनयाम । तदेतत् भद्रत्वमाह—

---

१- भस्मन्' इति क पा ।

तद्वा एतद्देवतानां नाम । (मे) एतद्यज्ञस्य तस्मादेतत्परिहरेत्साधु पुण्यमिति वह्वृचो ह वा ऽअस्यैता भवन्त्युपनामुक ऽएनं यज्ञो भवति य ऽएवं विद्वानेतत्परिहरति साधु पुण्यमिति ॥ १४ ॥

तामु हाग्निरभिदध्यौ । मिथुन्यनया स्यामिति ताᳬं सम्बभूव तस्याᳬं रेतः प्रासिञ्चत्तत्पयोऽभवत्तस्मादेतदामायां गवि सत्याᳬं शृतमग्नेर्हि रेतस्तस्माद्यदि कृष्णायां यदि रोहिण्याᳬं शुक्लमेव भवत्यग्निसङ्काशमग्नेर्हि रेतस्तस्मात्प्रथमदुग्धमुष्णं भवत्यग्नेर्हि रेतः ॥ १५ ॥

(स्ते) ते होचुः (हं) हन्तेदं जुहवामहा ऽइति कस्मै न ऽइदं प्रथमाय होष्यन्तीति मह्यमिति हैवाग्निरुवाच मह्यमिति योऽयं पवते मह्यमिति सूर्यस्ते न सम्पादयाञ्चक्रुस्ते हासम्पाद्योचुः प्रजापतिमेव पितरं प्रत्ययाम स यस्मै न ऽइदं प्रथमाय होतव्यं वक्ष्यति तस्मै न ऽइदं प्रथमाय होष्यन्तीति ते प्रजापतिं पितरं प्रतीत्योचुः कस्मै न इदं प्रथमाय होष्यन्तीति ॥ १६ ॥

---

तद्वा एतद्दैवतानां नाम, एतद्यज्ञस्य । तस्मादेतत्परिहरेत् साधु पुण्यमिति । बह्वृचो ह वा अस्यैता भवन्ति उपनामुक एनं यज्ञो भवति—य एवं विद्वानेतत्परिहरति—साधु पुण्यमिति ॥ १४ ॥

तामु हाग्निरभिदध्यौ—मिथुन्यनया स्यामिति । तां सम्बभूव । तस्यां रेतः प्रासिञ्चत् । तत्पयोऽभवत् । तस्मादेतदामायां गवि सत्यां शृतम्, अग्नेर्हि रेतः । तस्माद्यदि कृष्णायाम्, यदि रोहिण्याम्, शुक्लमेव भवति अग्निसङ्काशम्, अग्नेर्हि रेतः—तस्मात् प्रथमदुग्धमुष्णं भवति अग्नेर्हि रेतः ॥ १५ ॥

ते होचुः—हन्तेदं जुहवामहा इति । कस्मै न इदं प्रथमाय होष्यन्तीति । मह्यमिति हैवाग्निरुवाच, मह्यमिति—योऽयं पवते, मह्यमिति सूर्यः । ते न सम्पादयाञ्चक्रुः । ते हासम्पाद्योचुः—प्रजापतिमेव पितरं प्रत्ययाम, स यस्मै न इदं प्रथमाय होतव्यं वक्ष्यति, तस्मै न इदं प्रथमाय होष्यन्तीति । ते प्रजापतिं पितरं प्रतीत्योचुः—कस्मै न इदं प्रथमाय होष्यन्तीति ॥ १६ ॥

---

यज्ञो हीति । यस्माद् गोर्व्यतिरेके क्षीरघृतादिहविषोऽभावात् यज्ञो न निर्मीयते, अस्य यं गौः यज्ञात्मिका । अन्नरूपत्वेनापि स्तौति—अन्नं हीति ॥ १३ ॥

तासां गवां यज्ञस्य च साधारणमेकं नामोद्दिश्य प्रशंसति—तद्वा इति । गां यज्ञं च एतदुभयमुत्कृष्टं पुण्यरूपमिति अनेनाभिप्रायेण 'परिहरेत्' रक्षेत् । तस्य परिहरणस्य फलमाह—बह्वृचोहेति । 'उपनामुकः' उपनमनशीलः, यज्ञ एनमुपगतो भवतीत्यर्थः ॥ १४ ॥

पयस उत्पत्तिमाह—तामु हेति । 'अभिदध्यौ' अभिध्यानं कृतवान् । कथमिति, एतया गवा मिथुनीभवानीति । तां सम्बभूवेत्यादि, स्पष्टम् ॥ १५ ॥

एवं पयोरूपस्य हविष उत्पत्तिमभिधाय, अग्निसूर्यवायूनां मध्ये कस्मै प्रथमं देयं कस्मै चानन्तरमित्येतद् विभजति—ते होचुरिति । ते देवाः 'ऊचुः' अस्मदीयः पिता प्रजापतिः यथा अजुहोत्, एवमिदं वयं 'जुह-

स होवाच । ( चा ) अग्रयेऽग्निरनुष्ठ्या स्वर्ठं रेतः प्रजनयिष्यते तथा प्रजनिष्यध्व इत्यथ तुभ्यमिति सूर्य्यमथ यदेव हूयमानस्य व्यश्नुते तदेवैतस्य योऽयं पवत इति तदेभ्य इदमप्येतर्हि तथैव जुह्वत्यग्रयऽएव सायर्ठं सूर्य्याय प्रातरथ यदेव हूयमानस्य व्यश्नुते तदेवैतस्य योऽयं पवते १७॥

ते हुत्वा देवाः । ( ऽ ) इमां प्रजातिं प्राजायन्त यैषामियं प्रजातिरिमां विजितिं व्यजयन्त येयमेषां विजितिरिममेव लोकमग्निरजयदन्तरिक्षं वायुर्दिवमेव सूर्य्यः स यो हैवं विद्वानग्निहोत्रं जुहोत्येतार्ठं हैव प्रजातिं प्रजायते यामेतऽएतत्प्राजायन्तैतां विजितिं विजयते यामेतऽएत-

---

स होवाच—अग्नये । अग्निरनुष्ठ्या स्वं रेतः प्रजनयिष्यते, तथा प्रजनयिष्यध्व इति । अथ तुभ्यमिति सूर्यम । अथ यदेव हूयमानस्य व्यश्नुते, तदेवैतस्य—योऽयं पवत इति । तदेभ्य इदमप्येतर्हि तथैव जुह्वति—अग्नय एव सायम्, सूर्याय प्रातः, अथ यदेव हूयमानस्य व्यश्नुते तदेवैतस्य—योऽयं पवते ॥ १७ ॥

ते हुत्वा देवा इमां प्रजातिं प्राजायन्त—यैषामियं प्रजातिः, इमां विजितिं व्यजयन्त—येयमेषां विजितिः । इममेव लोकमग्निरजयत्, अन्तरिक्षं वायुः, दिवमेव सूर्यः । स यो हैवं विद्वानग्निहोत्रं जुहोति—

---

वामहै' । किंच यजमाना 'न' अस्माकं मध्ये 'कस्मै' 'प्रथमाय' 'होष्यन्ति' 'इति' उक्तवन्तः । महाग्निः यदि, निादमिदम् । ते न सम्पादयाञ्चक्रुरिति । 'ते' देवाः परस्परं सम्पन्नाः ऐकमत्यं गता न बभूवुरित्यर्थः ॥ १६ ॥

स होवाचेति । अग्निरनुष्ठ्येति । एवं विवदमानेषु आगतेषु स प्रजापतिरेवमुक्तवान्—'अग्ने' प्रथमं होतव्यम्' 'अग्निर्हि' 'अनुष्ठ्या' अनुष्ठानेन प्रजननेन स्वकीयं 'रेतः' गवि पयोरूपेण निरवर्तयत् 'तथा' यूय मिति । तस्मादग्निरेतस्मादेव 'प्रजनिष्यध्व' प्रजाता भवथ । तस्मादग्नय एव प्रथमं होतव्यमित्युक्त्वा, प्रजापतिः 'अथ' अनन्तरं 'तुभ्यम्' होतव्यम् 'इति' 'सूर्यम्' प्रति उक्तवान् । हूयमानस्य च पयसः 'यद्' 'व्यश्नुते' विप्रुड्भिराप्नोति ॥ एष वायोर्भाग इति वायुं प्रत्यब्रवीत् । तदेभ्य इत्यादि । यस्मादेवं प्रजापतिनोक्तम्, तस्मादेव कारणात् तत् पय एव 'अग्नये सायं जुह्वति', 'प्रातः सूर्याय' इति विभागः सम्पन्नः ॥ १७

'ते हुत्वा देवा' इति । ते च देवाः 'एवं' 'हुत्वा' प्रजात्यादिष्टं फलं प्राप्नुवन् । एतद् ज्ञात्वा इदानीन्तनोऽपि यजमानो 'यः' 'अग्निहोत्रं जुहोति,' स 'एताम्' अग्निसूर्यादिभिः प्राप्तां प्रजातिम् । इतरत् सुगमम् ॥

---

१—'विप्रुड्मति'—क ख घ । २—'हविर्होमा' इति का श्री सू ४ । १० । १६ । "वाग्यतो दोहप्रभृत्याहोमात् क्षीरहुता वेद—विः च दर्वेण ॥ तद् । पशुका सर्वकामः पशुकामो वा, यवाग्वा ग्रामकामः, तण्डुलैर्बलकामः, दध्नेन्द्रियकामः, अनभिवयसे च घृतेनाम्भर्वाभ्यां, इ न तजस्कामः, सर्वत्र जुहुयादेतेषामेकेन कामसंयोगे'—इत्यादीनि सूत्राणि ( का श्री. सू. ४ । १५ । २१-२६ ) पर्यालोच्यानि ॥

व्यजयन्तैतैरु हैव सुलोको भवति यऽ एवं विद्वानग्निहोत्रं जुहोति तस्माद्वा ऽअग्निहोत्रᳫँ होतव्यम् ॥ १८ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ २–२ ॥

इति द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ २–२–४ ॥

इति द्वितीयकाण्डे द्वितीयोऽध्यायः ॥ २ ॥

---

एतां हैव प्रजातिं प्रजायते—यामेत एतत् प्राजायन्त, एतां विजितिं विजयते—यामेत एतद्व्यजयन्त । एतैरु हैव सलोको भवति, य एवं विद्वानग्निहोत्रं जुहोति । तस्माद्वा अग्निहोत्रं होतव्यम् ॥ १८ ॥

---

एतावता अग्निहोत्राख्यस्य कर्मणः पयो द्रव्यम्, तच्च सायम्प्रातःकालयोरनुष्ठेयम्, तत्र सायङ्कालीनस्य अग्निर्देवता, प्रातःकालीनस्य सूर्यः, इत्येतत् प्रतिपादितं भवति ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ २–२–४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं
　　सप्ताम्भोधीन् पयस्वीरीविश्वजिद्रथतरू धेनुसौवर्णभूमीः ।
रत्नोस्रां हेमकामाविप्रहितरथौ सायणः शिङ्गणार्यो
　　व्यश्राणद्विश्वचक्रं प्रथितविविधमहाभूतयुक्तं घटञ्च ॥ २ ॥
धान्याद्रिं धन्यजन्मा तिलमयमनुजः स्वर्णजं वर्णमुख्यः
　　कार्पासीनं कृशानुं गुडकृतमचलो राजतं राजपुत्रः ।
आज्योत्थं प्राज्यजन्मा लवणजमनुगः शार्करं चार्कतेजा
　　रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥ ३ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण
विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे
द्वितीयोऽध्यायः समाप्तः ॥ २ ॥ २ ॥ २ ॥

---

१–" सायं प्रातर्वा " का. श्रौ. सू. ४ । १६–२० । २–" यदितरमग्निर्जुहोत्यग्नेर्ज्योतिरिति जुहोति वा "–" अग्निर्वर्चः इति प्रवरसंख्ययस्य " का. श्रौ. सू. ४ । १४ । १४–१६ ॥ ३–" अग्निकार्ये सूर्यो—ज्योतिः इति वा—ज्योतिः सूर्यः इति च प्रातः " इति का. श्रौ. सू. ४ । १५ । ८–९–१० ॥

# अथ तृतीयाध्याये प्रथमं ब्राह्मणम् ।

सूर्य्यो ह वा ऽअग्निहोत्रम् । तद्यदेतस्या ऽअग्र ऽआहुतेरुदैत्तस्मात्सूर्य्यो ऽग्निहोत्रम् ॥ १ ॥

(२) स यत्सायमस्तमिते जुहोति । स इदं तस्मिन्निह सति जुहवानीत्यथ यत्प्रातरनुदिते जुहोति स इदं तस्मिन्निह सति जुहवानीति तस्माद्वै सूर्य्योऽग्निहोत्रमित्याहुः ॥ २ ॥ [ शतम् १००० ]

(३) अथ यदस्तमेति । तदग्नावेव योनौ गर्भो भूत्वा प्रविशति तं गर्भं भवन्तमिमाः सर्व्वाः प्रजा ऽअनुगर्भा भवन्तीलिता हि शेरे सञ्जानाना ऽअथ यद्रात्रिस्तिर ऽएवैतत्करोति तिर ऽइव हि गर्भाः ॥ ३ ॥

---

सूर्यो ह वा अग्निहोत्रम् । तद्यदेतस्या अग्रे आहुतेरुदैत्, तस्मात्सूर्योऽग्निहोत्रम् ॥ १ ॥

स यत्सायमस्तमिते जुहोति—स इदं तस्मिन्—इह सति जुहवानीति । अथ यत् प्रातरनुदिते जुहोति—स इदं तस्मिन्—इह जुहवानीति । तस्माद्वै सूर्योऽग्निहोत्रमित्याहुः ॥ २ ॥

अथ यदस्तमेति, तदग्नावेव योनौ गर्भो भूत्वा प्रविशति । तं गर्भं भवन्तमिमाः सर्वाः प्रजा अनुगर्भा भवन्ति ईलिता हि शेरे सञ्जानानाः । अथ यद् रात्रिः, तिर एवैतत्करोति । तिर इव हि गर्भाः ॥ ३ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

सायम्प्रातर्होमयोः कालविशेषं विधित्सुरग्निहोत्रं सूर्यात्मना प्रशंसति—सूर्य्यो हेति । तदुपपादयति—एतस्या इति । प्रजापतिना प्रथमं हुताया इत्यर्थः ॥ १ ॥

प्रकारान्तरेण सूर्यात्मकतां ब्रुवन् सायंप्रातर्होमयोः कालविशेषं विधत्ते—स यदिति । 'स' यजमान 'इह' अग्नौ तस्मिन् सूर्ये 'सति' 'इदं' हविः जुहवानि इति मन्यते, स सायमग्निहोत्रमस्तमिते कुर्यात्, प्रातर्होममनुदिते, अनुदितो हि सूर्योऽग्निनैकीभूतो वर्तते "अग्निं वाव आदित्यः सायं प्रविशति"—(तै०ब्रा० २।१।२।९) इति श्रुतेः । यस्मादेवमग्निहोत्रं सूर्यसम्बद्धम्, तस्मात् तादात्म्येन स्तुतिः ॥ २ ॥

रात्रौ सूर्यस्याग्न्यवस्थानं प्रतिपादयति—अथ यदिति । सूर्यस्य गर्भभावमनु रात्रौ 'सर्वाः प्रजाः' 'गर्भा एव' 'भवन्ति' । तासां गर्भसाम्यमाह—ईलिता इति । रात्रौ हि सर्वाः प्रजाः 'सञ्जानानाः' समानमविशेषं ज्ञानं प्राप्ताः 'ईलिताः' स्तुताः दृष्टाः 'शेरे' शेरते । "लोपस्त आत्मनेपदेषु" इति तलोपः (पा० सू० ७।१।४१) पुनरपि गर्भसाम्यमाह—अथ यदिति । गर्भरूपेणाग्नाववस्थितं सूर्यं रात्रिः 'तिर एव' तिरोहितमाच्छादितं करोति । यत्तदेव तस्मात् असौ 'गर्भः' 'तिर इव हि' लौकिकगर्भस्य प्रसिद्धिः शब्देनोक्ता ॥ ३ ॥

---

१–'उदिते यजमानो ... अग्निहोत्र' । का० श्रौ० सू० ४।१३।१ ॥ २–'अस्तमिते जुहोति' । का० श्रौ० सू० ४।१४।६ ॥ ३–'प्रातर्जुहोत्यनुदिते' । का० श्रौ० सू० ४।१५।१ ।

स युत्सायमुस्तमिते जुहोति । गुर्भमेवैतत्सुन्तमभिजुहोति गुर्भथ्ँ सुन्तमभिकरोति स यद्गुर्भथ्ँ सुन्तमभिजुहोति तुस्मादिमे गुर्भा अुनश्नन्तो जीवन्ति ॥ ४ ॥

( न्त्यु ) अुथ युत्प्रातरुनुदिते जुहोति । प्रुजनयत्येवैनमेतुत्सोऽयं तेुजो भूत्वा विभ्राजमान उ्देति शृश्वद्ध वै नोुदियाद्यदुस्मिन्नेतामाहुतिं नु जुहुयात्तुस्माद्वा ऽएतामाहुतिं जुहोति ॥ ५ ॥

स यथाऽहिस्त्वचो निर्मुच्येत । ( तै ) एवथ्ँ रात्रेः पाप्मनो निर्मुच्यते युथा ह वाऽअुहिस्त्वचो निर्मुच्येतैवथ्ँ सुर्वस्मात्पाप्मनो निर्मुच्यते य ऽएवं विद्वानग्निहोत्रं जुहोति तुदेतुस्यैवानु प्रजातिमिमाः सुर्वाः प्रजाऽअनु प्रजायन्ते वि हि सृज्यन्ते यथार्थम् ॥ ६ ॥

---

स यत् सायमस्तमिते जुहोति—गर्भमेवैतत्सन्तमभिजुहोति, गर्भं सन्तमभि करोति । स यद्गर्भं सन्तमभिजुहोति—तस्मादिमे गर्भा अनश्नन्तो जीवन्ति ॥ ४ ॥

अथ यत् प्रातरनुदिते जुहोति—प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा विभ्राजमान उदेति । शश्वद्ध वै नोदियाद्—यदस्मिन्नेतामाहुतिं न जुहुयात् । तस्माद्वा एतामाहुतिं जुहोति ॥ ५ ॥

स यथाऽहिस्त्वचो निर्मुच्येत—एवं रात्रेः पाप्मनो निर्मुच्यते । यथा ह वा अहिस्त्वचो निर्मुच्येत—

---

एवं गर्भरूपत्वं प्रतिपाद्य अस्तमिते होममनुवादयति—स यत्सायमिति । गर्भं सन्तमिति । अस्तमयात्, पूर्वं हि सूर्यस्याकाशेऽवस्थानाद् गर्भभावो नास्ति, तदूर्ध्वन्तु अग्नौ गर्भरूपेण प्रविशन्तम् 'अभि' होमं कुर्वन्, परस्मिन् दिवसे पुनर्जनयितुं वर्द्धयति । यद्गर्भमित्यादि । यस्माद् गर्भभूतस्य सूर्यस्य रात्रावग्निहोत्रहविषा वर्द्धनम्, तस्मादेवञ्जातीया इतरे गर्भाः 'अनश्नन्तः' अशनमकुर्वन्तोऽपि 'जीवन्ति' वर्द्धन्ते ॥ ४ ॥

एवं सायंहोमस्य गर्भवृद्धिहेतुतामभिधाय, प्रातर्होमस्य तज्जननहेतुत्वमुपपादयन्, तस्य ततः प्रागेवानुदिते, कर्त्तव्यतामाह—अथ यत् प्रातरिति । अन्वयव्यतिरेकाभ्यां प्रातराहुतेर्जननहेतुतामुपपादयति—सोऽयमिति । तेजो भूत्वेति । आहुत्या वर्द्धितस्तेजस्वी भूत्वेत्यर्थः । शश्वद्ध वा इति । नित्यमेवेत्यर्थः ॥ ५ ॥

इततः सुप्तस्य तेजःप्राप्तिं दृष्टान्तेनोपपादयति—स यथेति । रात्रेः पाप्मन इति । रात्रिरूपात् तेजःप्रतिबन्धकात् पापादित्यर्थः । एवं सूर्याग्निहोत्रहोमान्वयनिर्मोकं प्रतिपाद्य विदुषोऽपि प्रतिपादयति—यथा ह वा इति । वि हि सृज्यन्त इति । अनुदितहोमान्ते सूर्यस्योदये सति 'यथार्थं' यथाप्रयोजनं 'सर्वाः प्रजाः' विसृज्यन्ते प्रवर्त्तन्त इत्यर्थः ॥ ६ ॥

---

१-सति चात्र बहवः काम्यकल्पविशेषाः । तथा—"यथास्तमिते पर्युदयाच्च स्वर्गकामस्य, तमोऽस्यवे सायं जुहुयाद्धिमानि प्रातः पशुकामस्य, अन्तःप्रशौ पशुकामस्य सायं प्रातः, शकाने श्रीकामस्य प्रातः" का. श्रौ. सू. ४ । १५ । १२-१५ तथैव होमायतान्य. वस्तुः भरि बहुविधस्तत्रैवोक्तः—" प्रथमामीद् धूपमाने प्रजानु निहत्यैव स्वराजमनन्यतः, भूयिष्ठार्चिषि गृहीत्वैव सहसा, प्रदोषतमे भीवसत्कामस्य, अर्चिअत्यन्ता मेक्षणमनन्ततः अंगारेषु काद्रयमानेषु ब्रह्मवर्चसकामस्य" इति का श्रौ.सू. ४।१५।१६-२०॥

पात्राणि भवन्ति। पात्रेषु ह्यशनमश्यते यवमयानि भवन्ति यवान्हि जक्षुर्वीर्वरुणोऽगृह्णाच्छूर्पेण जुहोति शूर्पेण ह्यशनं क्रियते पत्नी जुहोति मिथुनादेवैतद्वरुणपाशात्प्रजाः प्रमुञ्चति ॥ २३ ॥

पुरा यज्ञात्पुराहुतिभ्यो जुहोति। अहुतादो वै विशो विशो वै मरुतो यत्र वै प्रजापतेः प्रजा वरुणगृहीताः परिदीर्णा अनत्यश्च प्राणत्यश्च शिशियिरे च निपेदुश्च तद्धासां मरुतः पाप्मानं विमेथिरे तथो एवैतस्य प्रजानां मरुतः पाप्मानं विमथ्नते तस्मात्पुरा यज्ञात्पुराहुतिभ्यो जुहोति २४

यदेकैकेन—या अस्य प्रजा जाताः ता वरुणपाशात् प्रमुञ्चति। एकेनातिरिक्तानि भवन्ति। तथा यवास्य प्रजा अजाताः, ता वरुणपाशात् प्रमुञ्चति। तस्मादेकेनातिरिक्तानि भवन्ति ॥ २२ ॥

पात्राणि भवन्ति। पात्रेषु ह्यशनमश्यते। यवमयानि भवन्ति। यवान् हि जक्षुर्वीर्वरुणोऽगृह्णात्। शूर्पेण जुहोति। शूर्पेण ह्यशनं क्रियते। पत्नी जुहोति। मिथुनादेवैतद्वरुणपाशात् प्रजाः प्रमुञ्चति२३

पुरा यज्ञात्पुराहुतिभ्यो जुहोति। अहुतादो वै विशः। विशो वै मरुतः। यत्र वै प्रजापतेः प्रजा वरुणगृहीताः परिदीर्णा अनत्यश्च, प्राणत्यश्च,—शिशियिरे च, निपेदुश्च—तद्धासां मरुतः पाप्मानं विमेथिरे। तथो एवैतस्य प्रजानां मरुतः पाप्मानं विमथ्नते। तस्मात् पुरा यज्ञात् पुराहुतिभ्यो जुहोति॥२४

तदनूद्य स्तौति—तानि वा इति। 'प्रतिपुरुषं' पुरुषं पुरुषं प्रत्येकैकं करम्भपात्रं भवति। यावन्त इत्याद्युक्तार्थम्। पुरुषसङ्ख्यया पात्रनिर्माणस्य प्रयोजनमाह—तद् प्रतिपुरुषमिति। 'अस्य' यजमानस्य 'याः प्रजाः जाताः' 'ताः' 'प्रतिपुरुषं' प्रत्येकम् 'एकैकेन' पात्रेण 'वरुणपाशात्' 'प्रमुञ्चति' एकातिरिक्ततामेषामनूद्य स्तौति—एकेनेति। जनिष्यमाणानां प्रजानां वरुणपाशविमोचनार्थमेकमतिरिक्तं कर्तव्यमित्यर्थः ॥ २२ ॥

पुरोडाशादिरूपतां विहाय पात्ररूपेण निर्माणमुपपादयति—पात्राणीति। 'हि' यस्मात् 'पात्रेषु' कांस्यादि-निर्मितेषु 'अशनम्' अन्नम् 'अश्यते' भुज्यते, अतो भक्ष्या यवरूपस्यान्नस्य भोजनीयपात्ररूपेणैवैतानि निर्मातव्यानीत्यर्थः। यवमयत्वमनूद्य स्तौति—यवमयानीति। 'जक्षुषीः' भक्षितवतीरित्यर्थः। अथ तेषां करम्भपात्राणां होमं विधत्ते—शूर्पेणेति। स्रुगादिपात्रं विहाय शूर्पेणैवैतानि जुहुयात्। तेन हि 'शूर्पेण' तुष-निर्वपनद्वारा 'अशनम्' अन्नं 'क्रियते' अतः शूर्पहवनं प्रशस्तम्। न चात्र शूर्पो हेत्वर्थः शङ्कनीयः; "हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम्, स्तुतिस्तु शब्दपूर्वत्वात्" (जै. सू. मी. १।२।२९–३० अधि० ३) इत्यधिकरणे स्तुतित्वेनान्वयस्य प्रतिपादितत्वात् 'पत्नी जुहोति' इति कर्तृविधिः। 'मिथुनादेव' इत्यादि तत्प्रशंसा। स्त्रिया अपि कर्तृत्वेन होमेऽन्वयात् मिथुनं सम्पद्यते। तथा च यजमानपत्नीरूपान्मिथुना-देवेत्ययमर्थः सिध्यति ॥ २३ ॥

स्रुवाघारहोमादेः पूर्वभावित्वं करम्भपात्रहोमस्य विधत्ते—पुरेति। यो वषट्कारप्रदानो यजतिचोदित आग्नेयः,

१–'एतदतिरिक्तानाम्–' इ० पा०। २–करम्भपात्राणि जुहोति शूर्पेण मूर्द्धनि कृत्वा दक्षिणेऽग्नेः प्रत्यङ्मुखौ जायापती वा दक्षिणे-नाहवनीयं पूर्वेण वेदिमपरेण यज्ञाग्नं इति (का श्रौ. सू. ५।२१)। पत्नी शूर्पं मूर्द्धनि कृत्वाऽऽगच्छति। शूर्पं मस्तकादधो-ऽवतार्य शूर्पेणैव करम्भपात्राणि जुहोति। न ■ शीर्षावस्थितशूर्पेण। आधानीहोमपक्षे यजमानः पत्नीमन्वारभते। इति कर्काचार्यः। ३–'परावपनद्वारा'–इ. पा.। ४–"तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतयः–" (का.श्रौ.सू. अ. १ सू.२५)।

( ह्रा ) अथैन्द्रीं मरुत्वतीं जपति । यत्र वै प्रजापतेः प्रजानां मरुतः पाप्मानं विमेथिरे तद्धेक्षाञ्चक्रऽइमे ह मे प्रजा न विमथ्नीरन्निति ॥ २६ ॥

स एतामैन्द्रीं मरुत्वतीमजपत्क्षत्रं वाऽइन्द्रो विशो मरुतः क्षत्रं वै विशो निषेद्धा निषिद्धा असन्निति तस्मादैन्द्री ॥ २७ ॥

मो षू णः । ( ८ ) इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः । महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीरिति ॥ २८ ॥

---

अथैन्द्रीं मरुत्वतीं जपति । यत्र वै प्रजापतेः प्रजानां मरुतः पाप्मानं विमेथिरे–तद्धेक्षाञ्चक्रे–' इमे ह मे प्रजा न विमथ्नीरन् ' इति ॥ २६ ॥

स एतामैन्द्रीं मरुत्वतीमजपत् । क्षत्रं वा इन्द्रः, विशो मरुतः । क्षत्रं वै विशो निषेद्धा । ' निषिद्धा असन् ' इति तस्मादैन्द्री ॥ २७ ॥

"मो षू ण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः । महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो वन्दते गीः"–इति ॥ २८ ॥

---

यजमानस्य मन्त्रजपं विधत्ते–अथेति । ' अथ '–शब्दो होमानन्तर्ये, ' ऐन्द्रीम् ' इन्द्रदेवताकाम्, ' मरुत्वतीं ' मरुत्वच्छब्दयुक्ताम्, " मो षूण इन्द्र "–इत्यादिकामृचं यजमानो जपेदित्यर्थः । उक्तं हि सूत्रकृता– " मो षू ण इति यजमानो जपति "–( का. श्रौ. सू. ९ । १३२ ) इति मरुत्वदिन्द्रदेवताकामृचं प्रशंसति–यत्रेति । मरुतः पाप्मानमित्यादि । यदा खलु वरुणपाशेन बद्धाः प्रजाः, तदा तासां यद् बन्धनकारणं पाप मरुतः, ' विमेथिरे ' विलोपितवन्तः, ' तत् ' तदानीं प्रजापतिः खलु ' ईक्षाञ्चक्रे ' पर्यालोचितवान्–' इमे ' खलु ' मरुतः ' मदीयाः ' प्रजाः ' न विमथ्नीरन् न विनाशयेरन् इति ॥ २६ ॥

स एतामिति । ' सः ' प्रजापतिः पूर्वोक्तरूपं पर्यालोच्य ' एताम् ऐन्द्रीं मरुत्वतीम् ' ऋचम् ' अजपत् ' अत्रेन्द्रस्य प्रसङ्गमाह–क्षत्रं वा इति । ' इन्द्रः ' खलु क्षत्रियजातिः, तस्येन्द्रस्य ' विशो मरुतः ', क्षत्रियो हि प्रजाना ' निषेद्धा ' निरोधकः, तेनेन्द्रेण ' निषिद्धाः ' निवारिता भवेयुः । ' इति ' अनेनाभिप्रायेणेन्द्रदेवताकया ऋचो जप इत्यर्थः ॥ २७ ॥

तामृचं पठति–मो ष ण इति । अस्याश्चायमर्थः हे–' इन्द्र ' ! ' अत्र ' एषु ' पृत्सु ' संग्रामनामैतत् । ' नः ' अस्मदीयाः प्रजाः ' मा उ सु ' हिंसीः । हे ' शुष्मिन् ' बलवन्निन्द्र ! ' देवैः ' मरुद्भिः सहितस्य ' ते ' तव ' अवयाः ' अवपूर्वाद् यजेः " अवयाः–श्वेतवाः "–( पा. सू. ८ । २ । ६७ ) इति निपात्यते । अवयजनरूपकर्म्मपात्रहेमः " अस्ति ' खलु ' महश्चित् ' महतोऽपि ' मीढुषः ' सेक्तुः यव्याः " सुपां सुलुक् "–( पा. सू. ७ । १ । ३९ ) इति भिस आडादेशः । यवमयैर्हविर्भिः ' हविष्मतः ' ' यस्य ' इन्द्रस्य ' मरुतः ' देवान्

---

१-महीधरस्तु–' अवयाः ' अवयुतो यागः ' अस्ति हि स्म ' विद्यते खलु । अवयुतस्य यजतेरेतद्रूपम् ' इत्याह । ' किंच पौरस्त्यं एतैरस्या वाङ् मरुतो भवतः सर्वान् वन्दते नमस्करोति, " नमो मरुद्भ्यः " इत्येवमाकारया स्तुतेर्नमस्काररूपत्वात्– ' इति व्याचख्यौ ।

( त्यु ) अथैनां वाचयति । ( त्यु ) अक्रन्कर्म कर्मकृत इत्यक्रन् हि कर्म कर्मकृतः सह वाचा मयोभुवेति सह ह्य वाचाऽक्रन्देवेभ्यः कर्म कृत्वेति देवेभ्यो हि कर्म कृत्वाऽस्तं प्रेत सचाभुव इत्यन्यतो ह्येतया सह भवन्ति तस्मादाह सचाभुव इत्यस्तं प्रेतेति जघनार्धो वाऽएष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रासीषदद्गृहा वाऽअस्तं गृहाः प्रतिष्ठा तद्गृहेष्वेवैना-मेतत्प्रतिष्ठायां प्रतिष्ठापयति ॥ २९ ॥

---

अथैना वाचयति–"अक्रन् कर्म कर्मकृतः"–(वा० ३।४७।) इति। अक्रन् हि कर्म कर्म-कृतः। " सह वाचा मयोभुवा "–( वा० ३।४७ ) इति। सह हि वाचाक्रन्। " देवेभ्यः कर्म कृत्वा "–( वा ३-४७ ) इति। देवेभ्यो हि कर्म कृत्वा। " अस्तं प्रेत सचाभुवः " ( वा० ३।४७ ) इति। अन्यतो ह्येतया सह भवन्ति। तस्मादाह–सचाभुव इति। अस्तं प्रेतेति। जघनार्द्धो वा एष यज्ञस्य–यत्पत्नी। तामेतत् प्राचीं यज्ञं प्रासीषदत्। गृहा वा अस्तम्, गृहाः प्रतिष्ठा। तद्गृहेष्वेवैनामेतत् प्रतिष्ठायां प्रतिष्ठापयति ॥ २९ ॥

---

अनुचरन् ' गौ ' स्तुतिरूपा वाक् ' वन्दन ' स्तौति " वदि अभिवादनस्तुत्योः "–इति धातुः ( धा. पा. भ्वा प ११ ) ' इति ' इत्यस्य पूर्वेणान्वयः ॥ २८ ॥

पत्न्या वाचन विधत्ते–अथैनामिति। न वाचयति मन्त्रं पदशोऽनूद्य व्याचष्टे–अक्रन् कर्मेति। कर्म कुर्वन्तीति ' कर्मकृत ' ये यजमानस्यात्विजः, ते हि इदानीं दर्शपूर्णमासहोमरूपं ' कर्म ' ' अक्रन् ' अकार्षुः अतोऽक्रन् कर्मेति मन्त्रभागस्तदनुरूपः। द्वितीयपादस्यार्थं प्रसिद्धं इत्याह–सह हीति। ' मयोभुवा ' मयस् सुखस्य भावयित्र्या मन्त्ररूपया वाचा सह एतत् कर्म ' अक्रन् ' अकार्षुः। देवेभ्य इत्यादि। हे यजमानस्यात्विजः ! यूयं देवेभ्यः दर्शपूर्णमासहोमरूपं कर्म कृत्वा ' कृत्वा ' ' अस्तं ' गृहमस्मिन् यजमानस्य गृहम् ' सचाभुवः ' पत्न्या सह भवन्तः, सह वर्तमानाः ' प्रेत ' प्रगच्छतेति मन्त्रभागस्यार्थः। सचाभुव इत्येतद् व्याचष्टे–अन्यत इति। अन्यस्मात् देशाद् पत्न्यायतन-लक्षणात् ' एतया ' आहवनीयसमीपं प्रापितया पत्न्या सह ऋत्विजश्च सर्वेऽपि, तस्माद् सचाभुव इत्येतद् यथार्थम्। अस्तं प्रेतेत्यस्याभिप्रायमाह–जघनार्धो वा इति। तामेतत् प्राचीमिति यज्ञस्यायमर्थोऽवस्थिता ' एतद् ' एतर्हि ' प्राचीं ' प्राग् गच्छन्तीं पूर्वभागमभिनीतां ' यज्ञं ' ' प्रासीषदत् ' प्रापितवत् प्रतिष्ठापना। तदिदमेतत् इति यदिह रूपम्। गृहा वा अस्तमिति। अस्यते क्षिप्यते सर्वं वस्तुजातमस्मिन्निति ' अस्तं गृहं ' " कोऽधिकरणे च "–इति ( पा सू. ३।४।७६ ) तत्प्रत्ययः। एतत् ' एतेन ' अस्तं प्रेत '–इति मन्त्रभागवचनेन गृहरूपायामेव ' प्रतिष्ठायां ' पुनः ' एनां ' स्थापितवान् भवति ॥ २९ ॥

---

१–अक्रन्कर्मेत्येना वाचयति प्रतिष्ठन्तु ( कर्के )। का श्रौ सू। ३। १२३। प्रतिष्ठाप्रयोजनान्तेनैव मार्जनं प्रतिष्ठानमेति।

प्रतिपराशीर्य्येति प्रतिप्रस्थाता । सम्मृजन्त्यग्निᳬं सम्मृष्टेऽग्नौ तावुभावेवोत्तरतावासारावासयतोऽथाध्वर्युराश्राव्य होतारं प्रवृणीते प्रवृतो होतोत्तरस्य वेदेर्होतृषदन उपविशत्युपविश्य प्रसौति तावुभावेव प्रसूतौ स्रुच आदायातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युराह समिधो यजेति यज यजेति चतुर्थे चतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः ॥ ३० ॥

(तौ) अथाध्वर्युराहाग्नयेऽनुब्रूहीति । (त्या) आग्नेयमाज्यभागं तावुभावेव

प्रतिपराशीर्य्येति प्रतिप्रस्थाता । सम्मृजन्त्यग्निम् । सम्मृष्टेऽग्नौ तौ उभावेवोत्तरतावासारावासयतः । अथाध्वर्युराश्राव्य होतारं प्रवृणीते । प्रवृतो होतोत्तरस्य वेदेर्होतृषदन उपविशति । उपविश्य प्रसौति । तौ उभावेव प्रसूतौ स्रुच आदायातिक्रामतः । अतिक्रम्याश्राव्याध्वर्युराह—समिधो यज इति । 'यज यज' इति चतुर्थे चतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः ॥ ३० ॥

अथाध्वर्युराह—'अग्नयेऽनुब्रूहि' इति—आग्नेयमाज्यभागम् । तौ उभावेव चतुरग्न्यस्याव्रदा-

अकृतं कर्माणि मन्त्रवाक्यानन्तरं कर्तव्यमुपदिशति—प्रतिपराशीर्य्येतीति । पत्नीं प्रतिनिवर्त्य स्वस्थानं प्रापयितुं 'प्रतिप्रस्थाता' 'उदेति' 'उद्गच्छेत्' । इत्थम् "अग्निमग्नीत्" —इति प्रैषसम्मार्जनयोर्मध्ये कर्तव्यमुक्त्वा, तत्सम्मार्जनप्रभृति प्रकृतिवदेवानुष्ठेयमिति दर्शयति—सम्मृजन्तीत्यादिना । एकस्मिन्नप्यग्नौ पूजार्थं बहुवचनम् । एवमाहवनीये 'अग्नौ' 'सम्मृष्टे' 'उभावेव' एवकारोऽप्यर्थे । उभावपि अध्वर्युप्रतिप्रस्थातारौ 'उत्तरौ आसारौ आसारयतः' दीर्घेणासारा कुर्वत इत्येवंरूपेणात्र भेदः प्रतिप्रस्थातुरपि दक्षिणेऽग्नौ आघारादिकं सर्वं प्रयोगजातमध्वर्युवदनुष्ठेयम् । अत एव तैत्तिरीयकेऽपि—"यदेवाध्वर्युः करोति तत् प्रतिप्रस्थाता करोति" इति । अध्वर्युरेवाश्रावयेदित्यादि । प्रवरप्रयाजाज्यभागादिसम्प्रैषस्य प्रेष्यस्य होतुरेकत्वात् कालभेदाभावाच्चाध्वर्युणैव कृतः, प्रैषः उभयत्रापि तन्त्रेणोपकरोतीत्येवंकाराभिप्रायः । प्रवरादीनां चोदकप्राप्तानामनुवादः । तेषां स्वरूपं प्रथमकाण्डे ( श. प. १।५।१ ) व्याख्यातमिति नेह पठ्यते । प्रतिप्रस्थातुरपि कर्तव्यं प्रतिपादयति—उत्तरस्य वेदेरित्यादि । होता सीदत्यस्मिन्निति होतृषदनम् । उत्तरस्या वेद्याः सम्बन्धिनि 'होतृषदने' स्थाने, न दक्षिणस्या इत्यर्थः । 'प्रसौति' अध्वर्युप्रतिप्रस्थातारौ प्रयाजान् कर्तुं स्रुगादाने प्रेरयति "षू प्रेरणे"—( धा. पा. अ. प. ३१ ) इति धातुः । 'प्रसूतौ' प्रेरितौ, अनुज्ञातावित्यर्थः । स्रुच आदायेति । अध्वर्युप्रतिप्रस्थात्रोरुभयोरपि प्रत्येकं जुहूपभृतौ स्तः, तदभिप्रायेण स्रुच इति बहुवचनम् । "समिधो यज"—इति प्रथमप्रयाजे सम्प्रैषः । द्वितीयादिषु "यज" इत्येव सम्प्रैषः । वीप्सा द्वितीयादिषु सर्वत्र सम्बन्धार्था । "चतुर्थे चतुर्थे" इति वीप्सा कर्तृद्वित्वापेक्षया । उभावपि 'चतुर्थे चतुर्थे प्रयाजे' अपि जुहूमाज्यं जुह्व 'समानयमानौ' प्रतिनयन्तौ 'नवभिः' नवसङ्ख्याकैः 'प्रयाजैः चरतः' ॥ ३० ॥

आज्यभागयोरपि प्रतिप्रस्थातृसाहित्यं विधत्ते—अथाध्वर्युरिति । उभावेवेति । उभावपि अध्वर्यु-

१–आनते सम्मार्जनाद्याज्यभागाभ्याम् । का. श्रौ. सू. ५ । १२४ ॥ २–स्रुग्भ्यामितरस्मै प्रतिप्रस्थाता । का. श्रौ. सू. ५ । १२५ । ३–पूर्वस्ताभिरुक्ते स्रुचावादायातिक्रम्याश्राव्याह समिधो यजेति पञ्चप्रयाजान्सामिधेन्ये । यजयजेति शेषम् । का. श्रौ. सू. ५ । १५ । ३६ । ४–नवप्रयाज नवानुयाजं । वैश्वदेवे पर्वं । व्यवस्यतश्च महाहविषं । का. श्रौ. सू. ५ । १२ । १३ ।

चतुर्गृहीतस्यावदायातिक्रामतोऽतिक्रम्याश्राव्याहाध्वर्युरग्निं यजेति ताऽ-उभावेव वषट्कृते जुहुतः ॥ २१ ॥

( तोऽ ) अथाध्वर्युराह सोमायानुब्रूहीति । सौम्यमाज्यभागं ताऽउभावेव चतुर्गृहीतस्यावदायातिक्रामतोऽतिक्रम्याश्राव्याहाध्वर्युराह सोमं यजेति ताऽउभावेव वषट्कृते जुहुतः ॥ २२ ॥

( स्त ) तद्यत्किञ्च वाचा कर्तव्यम् । ( म ) अध्वर्युरेव तत्करोति न प्रतिप्रस्थाता तद्यदध्वर्युरेवाश्रावयतीहैव यत्र वषट् क्रियते ॥ २३ ॥

कृतानुकर ऽएव प्रतिप्रस्थाता । क्षत्रं वै वरुणो विशो मरुतस्तत्क्षत्रा-यैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति प्रत्युद्यामिनीᳯह क्षत्राय विशं कुर्याद्यदपि प्रतिप्रस्थाताऽऽश्रावयेत्तस्मान्न प्रतिप्रस्थाताऽऽश्रावयति॥२४॥

---

यातिक्रामतः । अतिक्रम्याश्राव्याध्वर्युराह–' अग्निं यज ' इति । ता उभावेव वषट्कृते जुहुतः ॥ २१ ॥

अथाध्वर्युराह–' सोमायानुब्रूहि ' इति–सौम्यमाज्यभागम् । ता उभावेव चतुर्गृहीतस्यावदा-यातिक्रामतः । अतिक्रम्याश्राव्याध्वर्युराह–' सोमं यज ' इति । ता उभावेव वषट्कृते जुहुतः॥२२॥

तद्यद् किञ्च वाचा कर्तव्यम्–अध्वर्युरेव तत् करोति, न प्रतिप्रस्थाता । तद्यदध्वर्युरेवाश्रावयति इहैव यत्र वषट् क्रियते ॥ २३ ॥

कृतानुकर एव प्रतिप्रस्थाता । क्षत्रं वै वरुणो, विशो मरुतः । तत् क्षत्रायैवैतद्विशं कृतानुकरामनु-वर्त्मानं करोति प्रत्युद्यामिनीं ह क्षत्राय विशं कुर्यात् । यदपि प्रतिप्रस्थाताऽऽश्रावयेत् । तस्मान्न प्रति-प्रस्थाताऽऽश्रावयति ॥ २४ ॥

---

प्रतिप्रस्थातारौ ध्रौवस्य 'आज्यस्य' सकाशात् ' चतुरवदाय ' द्वाभ्यां चतुर्गृहीत्वेत्यर्थः । वषट्कृते जुहुत इति । एकस्मिन्नेव वषट्कारे द्वावपि स्वस्वाहवनीये जुहुत इत्यर्थः ॥ २१ ॥

अथाध्वर्युराह सोमायेत्यादि । एतेन द्वितीयाज्यभागस्यानुष्ठानप्रकारः प्रतिपादितः ॥ २२ ॥

सामिधेनीनिषादौ 'आश्राव्य' आश्रावणं चाध्वर्युरेवेति तत्र तत्र यत् प्रसक्त उक्तम्, तदिदानीं विवेच-यद्धदिति । 'यत्' किमपि आश्रावणादिकं 'वाचा कर्तव्यं' वागिन्द्रियसाध्यमिति, 'तत्' 'अध्वर्युरेव' कुर्यात् । 'प्रतिप्रस्थाता' तूष्णीं क्रियमाणमनुतिष्ठेत्, आश्रावणादिकं वाचा न प्रयुञ्जीत । इममेव श्रुतिमभिप्रेत्य सूत्रित-मापस्तम्बेन–"यत् किञ्च वाचा कर्माणि अध्वर्युरेव तत् कुर्यात्" ( आप. श्रौ. सू.८।९ । १७ )इति । अस्य नियमस्य प्रयोजनमाह–तद्यदिति । 'यत्र' उत्तरस्यां वेद्यां 'वषट् क्रियते' होत्रा वषट्कारः प्रयुज्यते । 'इहैव' अस्मिन्नेव स्थाने 'अध्वर्युरेक एव आश्रावयति' ॥ २३ ॥

कृतानुकर एवेति । ' प्रतिप्रस्थाता ' अध्वर्युणा प्रथमं कृतस्य केवलमनुकर्तैव भवति न त्वासां पृथगा-

---

१-मर्यादाम्लोमवहनाभिमन्त्रणाकुम्भकाकुर्वन्नेवजपानवाचनहोतृवदनवचनाश्रावणादिनाशुचिकर्मावानाद्यो[illegible] प्रतिप्रस्थाता । । का. श्रौ. सू.-५ । ११० । न करोतीत्यर्थः ।

पाणावेव प्रतिप्रस्थाता । स्रुचौ कृत्वोपास्तेऽथाध्वर्युरेवैतैर्हविर्भिः प्रचरत्याग्नेयेनाष्टाकपालेन पुरोडाशेन सौम्येन चरुणा सावित्रेण द्वादशकपालेन वाऽष्टाकपालेन वा पुरोडाशेन सारस्वतेन चरुणा पौष्णेन चरुणैन्द्राग्नेन द्वादशकपालेन पुरोडाशेन ॥ ३५ ॥

( ब्रा ) अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ विपरिहरतः । स यो मेषो भवति मारुत्यां तं वारुण्यामवदधाति या मेषी भवति वारुण्यां तां मारुत्यामवदधाति तद्यदेवं विपरिहरतः क्षत्रं वै वरुणो वीर्यं पुमान्वीर्यमेवैतत्क्षत्रे धत्तोऽवीर्या वै स्त्री विशो मरुतस्तदवीर्यामेवैतद्विशं कुरुतस्तस्मादेवं विपरिहरतः ॥ ३६ ॥

---

पाणावेव प्रतिप्रस्थाता स्रुचौ कृत्वोपास्ते । अथाध्वर्युरेवैतैर्हविर्भिः प्रचरति–आग्नेयेनाष्टाकपालेन पुरोडाशेन, सौम्येन चरुणा, सावित्रेण द्वादशकपालेन वाऽष्टाकपालेन वा पुरोडाशेन, सारस्वतेन चरुणा, पौष्णेन चरुणा, ऐन्द्राग्नेन द्वादशकपालेन पुरोडाशेन ॥ ३५ ॥

अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ विपरिहरतः । स यो मेषो भवति मारुत्याम्–तं वारुण्यामवदधाति । या मेषी भवति–वारुण्याम्–तां मारुत्यामवदधाति । तद् यदेवं विपरिहरतः । क्षत्रं वै वरुणो वीर्यं पुमान्, वीर्यमेवैतत् क्षत्रे धत्तः । अवीर्या वै स्त्री, विशो मरुतः, तदवीर्यामेवैतद्विशं कुरुतः । तस्मादेवं विपरिहरतः ॥ ३६ ॥

---

श्रावणं कुर्यात् । तथा क्षत्राय क्षत्रियाय ' विशं ' वैश्यजातिं ' कृतानुकरां ' कृतानुकुर्वाणाम् ' अनुवर्त्मानम् ' अनुगमनशीलां ' करोति ' । विपक्षे बाधमाह–प्रत्युद्यामिनीमिति । 'यद्' यदि हि अध्वर्युरेव प्रतिप्रस्थात्रादि पृथगाश्रावणं कुर्यात्, तदा ' क्षत्राय ' वैश्यजातिं प्रत्युद्यामिनीं ' प्रत्युद्यमनशीलां ' कुर्यात् ' । तस्मादिति, उक्तार्थानुगमनम् ॥ ३४ ॥

पाणावेवेति । एवमुभौ अध्वर्युप्रतिप्रस्थातारौ आज्यभागाभ्यां प्रचर्य, ' प्रतिप्रस्थाता ' हस्त एव जुहूस्रुचौ धारयन् ' उपास्ते ' उपतिष्ठति, आ पयस्याप्रचरणकालात् । ' अध्वर्युः ' तु ' एतैः ' आग्नेयादिभिः स्वेनैवासादितैः ' हविर्भिः ' ' प्रचरति ' । तानि हवींषि परिगणयति–आग्नेयेनेत्यादिना ॥ ३५ ॥

अथैताभ्यामित्यादि । एवमैन्द्राग्नपर्यन्तैः षड्भिर्हविर्भिरिष्ट्वा ' अथैताभ्यां ' वारुणीमारुतीभ्यां ' पयस्याभ्यां ' ' प्रचरिष्यन्तौ ' यष्टुं तावध्वर्युप्रतिप्रस्थातारौ मेषमेष्यौ ' विपरिहरतः ' । तदेव विपरिहरणं दर्शयति–स य इति । " सः उत्तरस्यामेव पयस्यायां मेषीम् "–( श. प. २ । ५ । १ । ३१ ) इत्यादिना विधानात् ' वारुण्यां मेषी ' स्यात् ' मारुत्यां मेषः ' । तत्र यो मारुत्यां मेषो भवति, तं ततः आदाय वारुण्यां स्थापयेत् ।

---

१–कृतानुकरोऽन्यत्र दक्षिणस्याम् । का. श्रौ. सू. ५ । १११ । २–स्रुक्पाणिरास्ते प्रतिप्रस्थाता । का. श्रौ. सू. ५ । १२५ ।
३–हविर्भिश्चरति । अध्वर्युः । का. श्रौ. सू. ५ । १२६ ।

( तृ०|२ ) अथाध्वर्युरेवाह व्रुरुणायानुब्रूहीति । स उपस्तृणीतऽआज्यमु-थास्यै व्वारुण्यै पयस्यायै द्विरवद्यति सोऽन्यतरेणावदानेन सह मेषमुवद-धात्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदाने ऽअतिक्रामत्यति-क्रम्याश्राव्याह व्रुरुणं यजेति व्वषट्कृते जुहोति ॥ ३७ ॥

सव्ये पाणावध्वर्युः स्रुचौ कृत्वा । दक्षिणेन प्रतिप्रस्थातुर्व्वांसोऽन्वारभ्याह मरुद्भ्योऽनुब्रूहीत्युपस्तृणीतऽआज्यं प्रतिप्रस्थाताऽथास्यै मारुत्यै पयस्यायै द्विरवद्यति सोऽन्यतरेणावदानेन सह मेषीमुवदधात्युथोपरिष्टादाज्यस्याभि-घारयति प्रत्यनक्त्यवदाने ऽअतिक्रामत्यथाध्वर्युरेवाश्राव्याह मरुतो यजेति व्वषट्कृते जुहोति ॥ ३८ ॥

---

अथाध्वर्युरेवाह–'वरुणायानुब्रूहि' इति । स उपस्तृणीत आज्यम् । अथास्यै वारुण्यै पयस्यायै द्विरवद्यति । सोऽन्यतरेणावदानेन सह मेषमवदधाति । अथोपरिष्टादाज्यस्याभिघारयति, प्रत्यनक्त्यवदाने, अतिक्रामति । अतिक्रम्याश्राव्याह 'वरुणं यज' इति, वषट्कृते जुहोति ॥ ३७ ॥

सव्ये पाणावध्वर्युः स्रुचौ कृत्वा दक्षिणेन प्रतिप्रस्थातुर्वासोऽन्वारभ्याह–'मरुद्भ्योऽनुब्रूहि' इति । उपस्तृणीत आज्यं प्रतिप्रस्थाता । अथास्यै मारुत्यै पयस्यायै द्विरवद्यति । सोऽन्यतरेणावदानेन सह मेषीमवदधाति । अथोपरिष्टादाज्यस्याभिघारयति, प्रत्यनक्त्यवदाने अतिक्रामति । अथाध्वर्युरेवा-श्राव्याह–'मरुतो यज' इति, वषट्कृते जुहोति ॥ ३८ ॥

---

यश्च मेषी मारुत्या, तां ताम् आज्य मावत्या स्थापयेत् । तदेतद् विपरिहरणमनूद्य स्तौति–तद्यदेवमिति । मेषो हि पुंस्त्वरूपः वीर्यरूपः, वरुणश्च क्षत्रियजातिः, तस्मिन् क्षत्रियजातेर्निधानात् 'वीर्यमेव एतत् क्षत्र' 'अर्वाग्' वीर्यं सामर्थ्यम्, तद्रहिता खलु 'स्त्री,' मरुतश्च वैश्यजातिः । मारुते हविषि स्त्रीपशो-र्मेष्या निधानात् तां वैश्यजातिम् 'अर्वाग्' वीर्यरहितामेव कुरुत ॥ ३६ ॥

विपरिहरणानन्तरं वारुण्याः पयस्यायाः प्रचरणं विधत्ते–अथाध्वर्युरिति । वरुणायानुब्रूहीति । होतारं प्रत्यनुवाक्यार्थं सम्प्रेषमुक्त्वा, जुह्वामुपस्तीर्य, 'अस्यै वारुण्यै' षष्ठ्यर्थे चतुर्थी, वारुण्याः पयस्यायाः 'द्विरवद्यति' । 'स' अवदानयोर्मध्ये 'अन्यतरेण' पूर्वेण उत्तरेण वा 'अवदानेन' 'सह' कृत्स्नं 'मेषं' स्रुचि 'अवदधाति' पुनरभिघार्य अवदानदेशे इति प्रयत्नं कुर्यात् । स ततोऽतिक्रमणादीनि प्रकृतिवत् कुर्यादित्यर्थः ॥ ३७ ॥

प्रतिप्रस्थातुर्मारुत्याः पयस्यायाः प्रचरणे विशेषमाह–सव्ये पाणाविति । स्वकीये 'स्रुचौ' जुहूपभृतौ अध्वर्युः धारयित्वा 'सव्ये पाणौ' कृत्वा, 'दक्षिणेन प्रतिप्रस्थातुः' 'वासोऽन्वारभ्य,' 'मरुद्भ्योऽनुब्रूहि'–इति होतारं प्रेष्य अन्वारम्भादिकं प्रतिप्रस्थाता कुर्यात् । सोऽन्यतरेणेति । स प्रतिप्रस्थाता पूर्वेणोत्तरेण

---

१–उपस्थप्रकरणात्प्रवर्ग्य व्याख्यातम् । का० श्रौ० सू० ५ । १२ । २–अन्यतरेणावदानेन सह मेषम् । का० श्रौ० सू० ५।१२४ ।

( त्यु ) अथाध्वर्युरेव कायेन । ( नै ) एककपालेन पुरोडाशेन प्रचरति कायेनैककपालेन पुरोडाशेन प्रचर्याध्वर्युरेवाहाग्नये स्विष्टकृतेऽनुब्रूहीति स सर्वेषामेव हविषामध्वर्युः सकृत्सकृदवद्यत्यथैतस्याऽएव पयस्यायै प्रतिप्रस्थाता सकृदवद्यत्यथोपरिष्टाद् द्विराज्यस्याभिघारयतस्ताऽउभावेवातिक्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाहाग्निꣳ स्विष्टकृतं यजेति ता ऽउभावेव वषट्कृते जुहुतः ॥ ३९ ॥

( तोऽ ) अथाध्वर्युरेव प्राशित्रमवद्यति । ( ती ) इडाꣳसमवदाय प्रतिप्रस्थात्रेऽतिप्रजिहीते तत्रापि प्रतिप्रस्थाता मारुत्यै पयस्यायै द्विरभ्यवद्यत्यथोपरिष्टाद् द्विराज्यस्याभिघारयत्युपहूय मार्जयन्ते ॥ ४० ॥

---

अथाध्वर्युरेव कायेनैककपालेन पुरोडाशेन प्रचरति । कायेनैककपालेन पुरोडाशेन प्रचर्याध्वर्युरेवाह–' अग्नये स्विष्टकृतेऽनुब्रूहि ' इति । स सर्वेषामेव हविषामध्वर्युः सकृत्सकृदवद्यति । अथैतस्या एव पयस्यायै प्रतिप्रस्थाता सकृदवद्यति । अथोपरिष्टाद् द्विराज्यस्याभिघारयतः । ता उभावेवातिक्रामतः । अतिक्रम्याश्राव्याध्वर्युरेवाह–'अग्निं स्विष्टकृतं यज' इति । ता उभावेव वषट्कृते जुहुतः ॥३९

अथाध्वर्युरेव प्राशित्रमवद्यति । इडां समवदाय प्रतिप्रस्थात्रेऽतिप्रजिहीते । तत्रापि प्रतिप्रस्थाता मारुत्यै पयस्यायै द्विरभ्यवद्यति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति । उपहूय मार्जयन्ते ॥४०॥

---

वाऽवदानेन सह हृत्वा मेषे जुह्वि अवदध्यात् । ततो मेषी वारुण्या प्रचरणेनेति । तत प्रतिप्रस्थाता वेदिमतिक्रामति । अनन्तरमध्वर्युरेव तदीय वामोऽन्वारभ्य " मरुतो यज " इति ब्रूयात् । होत्रायाज्यान्ते वषट्कृते सति केवल प्रतिप्रस्थाता दक्षिणे आहवनीये हविर्जुहोति, तमनु किञ्चिद् बाधाप्याहरेत् । एतत् सर्वं सङ्गृह्य कात्यायनेन सूत्रितम्–" पयस्याप्रचरणकाले मेषौ व्यतिहरत , अन्यतरेणावदानेन सहमेषं, मध्येन स्रुचौ गृहीत्वा प्रतिप्रस्थातुर्वामो दक्षिणेन मन्द्रयोऽनुवाचयति, वाऽग्नीध्रदवदानन्–इति ( का. श्रौ. सू. ५ । १२७–१३० ) ॥३८॥

कायेन हविषा प्रचरण विधत्ते–अथेति । प्रधानयागानन्तरमनुष्ठेय स्विष्टकृदभिप्रयोगजातं सर्वमनुक्रामति–अध्वर्युरेवाहाग्नये स्विष्टकृत इत्यादिना । " अनुब्रूहि–" इति । स्विष्टकृद्यागस्य पुरोऽनुवाक्यावैः । अनुष्ठित प्रधानयागे न्यूनातिरेकदोषपरिहारेण स्विष्ट होत्र यत्र करोतीति स्विष्टकृत् ॥

स सर्वेषामेवेति । आग्नेयादि–कायान्तानाम् । सकृत्सकृदिति । प्रत्येकमाग्नेय । स्विष्टकृदवदानमनक्ति वारयति–एतस्या एवेति । ' एतस्याः ' मारुत्याः पयस्यायाः. ' एव ' हविष सकाशात् स्विष्टकृदर्थं ' सकृत् ' एव अवद्येत्, नान्यस्माद्धविषोऽवदानमित्यर्थः । चतुरवदानसम्पत्तये अभिघारण-द्वित्वं विधत्ते–अथोपरिष्टादिति । 'द्वि.' कैयाप्यत्रचतुर्णनेऽर्थे, "द्वित्रिचतुर्भ्यः सुच्" ( पा. सू. ५ । ४ । १८ )–इति द्विशब्दात् सुच् ॥३९॥

अथाध्वर्युरेव प्राशित्रमिति । प्रतिप्रस्थातुः प्राशित्रावदान नास्तीत्येतदर्थः । तत्र तस्मात्पयस्याहविषः नाना परिक्रान्तत्वात् प्रकृतौ मानाभावात् प्राशित्रावदानस्याभिन्नस्य इति प्रपञ्च । इडां समवदायेति । सर्वेभ्यो

---

१–दर्विरेकदेश अग्नौ स्विष्टकृन्नी । का. श्रौ. सू. ५ । ३३ । २–तत्रैव सू. ३५–३९ द्रष्टव्याः ।

ताऽउभावेव सादयित्वा स्रुचौ व्यूहतः । स्रुचौ व्युह्य परिधीन्त्समुज्य परिधिमभिपद्याश्राव्याध्वर्युरेवाहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति सूक्तवाकᳪं होता प्रतिपद्यतेऽथैता ऽउभावेव प्रस्तरᳪं समुल्लुम्पत ऽउभावनुप्रहरत उभौ तृणेऽअपगृह्योपासाते यदा होता सूक्तवाकमाह ॥ ४२ ॥

( ब्रा ) अथाग्नीदाहानुप्रहरेति । ता ऽउभावेवानुप्रहरत ऽउभावात्मानाऽउपस्पृशेते ॥ ४३ ॥

ता उभावेव सादयित्वा स्रुचौ व्यूहतः । स्रुचौ व्युह्य, परिधीन् समज्य परिधिमभिपद्य, आश्राव्याध्वर्युरेवाह—" इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय " इति । सूक्तवाकं होता प्रतिपद्यते । अथैतौ उभावेव प्रस्तरं समुल्लुम्पतः, उभावनुप्रहरतः, उभौ तृणे अपगृह्योपासाते—यदा होता सूक्तवाकमाह ॥ ४२ ॥

अथाग्नीदाह 'अनुप्रहर' इति । ता उभावेवानुप्रहरतः, उभावात्माना उपस्पृशेते ॥ ४३ ॥

नुयाजप्रैष । यजयजेत्यादिसर्वत्र :"नित्यवीप्सयो " इति ( पा० सू० ८।१।४ ) यजेत्यस्य द्विर्वचनम् । औहवेन ध्रुवदाज्येन त्रिरिष्ट्वा चतुर्थे चतुर्थे अनुयाजे औरभृतम् 'सहानयमानौ' उभावपि अध्वर्युप्रतिप्रस्थातारौ ' नवभिः अनुयाजै. ' ' चरतः ' प्रचरत इत्यर्थ. । उभयापेक्षया ' चतुर्थे–चतुर्थे ' इति वीप्सा । प्रयाजानुयाजानां तत्सङ्ख्याकत्वं सम्भूय प्रशंसति–तद्यद्विति । प्रधानयागात् प्रथमनिष्पन्ना इति प्रयाजा', अनु पश्चादिज्यन्त इत्यनुयाजाः । कर्मणि घञ्, तावेतौ " प्रयाजानुयाजौ यज्ञाङ्गे " इति ( पा. सू. ७ । ३ । ६२ ) निपातनात् कुत्वाभावः । नव प्रयाजा अनुयाजाश्च यस्मिन् इत्युभयत्र बहुव्रीहि', शिष्टंनुक्तार्थम् ॥ ४१ ॥

अनुयाजानन्तरभावि स्रुग्व्यूहनादिकमपि चोदकप्राप्तमुभाभ्यां कर्तव्यमित्यनुक्रामति–ता उभावेवेत्यादिना । परिधिमभिपद्येति । मध्यमं परिधिमन्वारभ्येत्यर्थः । उक्तं हि कात्यायनेन–"प्रथमं परिधिं गृहीत्वाऽऽश्राव्याहेषिता दैव्या इति ( का. श्रौ सू. ३ । १२१ ) " इषिता दैव्या " ( श. प. ११।८।३।१० भा. ) इति सूक्तवाकप्रैषः प्रकृतावेव व्याख्यात. । समुल्लुम्पत इति । "लुम्प छेदने" ( धा. पा.तु. उ. १६१ ) समुच्छिन्त. समुद्गृह्णीत इति यावत् । उभावनु प्रहरत इति । सूक्तवाकेऽनूच्यमाने 'उभौ' अध्वर्युप्रतिप्रस्थातारौ ' अनुप्रहरतः ' स्वं स्वं प्रस्तरमग्नौ प्रक्षिपत इत्यर्थः । यदा होतेति । ' यदा ' खलु होता सूक्तवाकं परिसमापयति ॥ ४२ ॥

' अथ ' अनन्तरम् ' अग्नीत् ' आग्नीध्रः ' अनुप्रहर '–' इति ' अध्वर्युं प्रति ' आह ' उभावेवेति । यद्यप्यनुप्रहरेत्येकवचनेनाध्वर्युरेव प्रेर्यते तथापि कृतानुकरत्वात् प्रतिप्रस्थातुरपि तृणानुप्रहरणं विधत्ते इत्यर्थः । आत्मानौ उपस्पृशेते इति । "चक्षुष्पा" ( वा. सं २ । १६ ) इति मन्त्रेण । तथा च सूत्रितम्–"चक्षुष्पा इत्यात्मानमालभते " इति ( का. श्रौ. सू. ३ । १२३ ) ॥ ४३ ॥

१–स्रुचौ व्यूहतोऽध्वर्यु । का. श्रौ. सू. ५ । १२४. अध्वर्युग्रहणं वचनात्प्रत्युदाहरणार्थम् । तस्य हि व्यूहन प्रहणौ वैकल्पिक इति हेतुमस्ते । २–" पत्न्याऽनुकरोत्यत्र दक्षिणस्याम् " इति ( का. श्रौ. सू ५ । १११ ) श. प. भा. २ । ५ । २ । २७ । क. भाष्ये च द्रष्टव्यम् । ३–' आत्मानावुपस्पृशेते ' इति क. ।

( ते अ ) अथाह संवदस्वेति । ( त्य ) अगानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीत्यध्वर्युरेवैतदाह ता ऽउभावेव परिधीननुप्रहरत ऽउभौ स्रुचः सम्प्रगृह्य स्फ्ये सादयतः ॥ ४४॥

( तं ) अथाध्वर्युरेव प्रतिपरेत्य । पत्नीः संयाजयत्युपास्त ऽएव प्रतिप्रस्थाता पत्नीः संयाज्योदेत्यध्वर्युः ॥ ४५ ॥

( स्री ) त्रीणि समिष्टयजूंषि जुहोति । तूष्णीमेव प्रतिप्रस्थाता स्रुचं प्रगृह्णाति तद्ये वैश्वदेवेन यजमानयोर्वाससी परिहिते स्यातां ते ऽएवात्रापि स्यातामथास्यै वारुण्यै पयस्यायै क्षामकर्पमिथुमादायावभृथं यन्ति वरुण्यं वा एतन्निर्वरुणतायै तत्र न साम गीयते न ह्यत्र साम्ना किञ्चन क्रियते तूष्णीमेवेत्याभ्यवेत्योपमारयति ॥ ४६ ॥

---

अथाह–' संवदस्व ' इति । अगानग्नीद्–अगन् श्रावय श्रौषट्, " स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि"–इति अध्वर्युरेवैतदाह । ता उभावेव परिधीननुप्रहरतः, उभौ स्रुचः सम्प्रगृह्य स्फ्ये सादयतः ॥ ४४ ॥

अथाध्वर्युरेव प्रतिपरेत्य पत्नीः संयाजयति । उपास्त एव प्रतिप्रस्थाता । पत्नीः संयाज्योदेत्यध्वर्युः ॥ ४५

त्रीणि समिष्टयजूंषि जुहोति । तूष्णीमेव प्रतिप्रस्थाता स्रुचं प्रगृह्णाति । तद् ये वैश्वदेवेन यजमानयोर्वाससी परिहिते स्याताम्–ते एवात्रापि स्याताम् । अथास्यै वारुण्यै पयस्यायै क्षामकर्पमिथुमादायावभृथं यन्ति वरुण्यं वा एतत्–निर्वरुणतायै । तत्र न साम गीयते, नह्यत्र साम्ना किञ्चन क्रियते । तूष्णीमेवेत्याभ्यवेत्योपमारयति ॥ ४६ ॥

---

संवदस्वागानग्नीदित्यादिनामुक्तिप्रयुक्तिरूप यदस्ति तदग्नीध्रस्य अध्वर्युणोक्तं तत्सम्यगित्याह–अथाहेति । 'अथ' अनन्तर "संवदस्व" 'इत्याह' आग्नीध्र । तत्र संवदनमुक्तिप्रयुक्तिरूपमनुक्रामति–अगानिति । ते च मन्त्रा प्रश्नो व्याख्याता । तेषु च विनियोग सूत्रकृता दर्शित –(श.प.१।८।३।२०।भा.) एतेषा "संवदस्वागान्नग्नीदित्यन्त्यमन्त्रपमितरो व्यत्यासतः" (का. श्रौ. सू. ३।१२४)। इति "स्वगा दैव्या" इति ह्युवाकप्रैषमध्वर्युरेव कुर्यात् । परिधिप्रहरणादिक तूभाभ्यामेवानुष्ठेयम् । उभौ स्रुच इत्यादि । 'सम्प्रगृह्य' सम्यग् गृहीत्वा विमोचनार्थं स्फ्ये ' सादयत ' ॥ ४४ ॥

अथाध्वर्युरेवेति । प्रतिपरेत्येति । आहवनीयदेशात् प्रतिनिवृत्य गार्हपत्यसमीपं गत्वेत्यर्थ. । उपास्त इति । पत्नीसंयाजनसमये तूष्णीमुपविशेत् प्रतिप्रस्थाता, न तु तस्य तदानीं कृतानुकरणमपेक्षितमित्यर्थ । पत्नीः संयाज्योदेत्य उदैतीति । पत्नीसंयाजानन्तरमाहवनीयदेश गत्वेत्यर्थ. ॥ ४५ ॥

त्रीणि समिष्टयजूंषीति । तानि च पूर्वस्मिन् वैश्वदेवब्राह्मणे व्याख्यातानि (श.प.२।५।१।२१भा.) तूष्णीमेवेति । तत्रत्यास्तु समिष्टयजुर्होमसमये आग्नीध्र स्रुच तूष्णीमेव दक्षिणाग्रौ प्रगृह्णीयात् प्रागास्माज्य धारयेत् ।

( त्व ) अवभृथ निचुम्पुण । निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहीति कामꣳ हैते यस्मै कामयेत तस्मै दद्यान्न हि दीक्षितवसने भवतः स यथाऽहिस्त्वचो निर्मुच्येतैवꣳ सर्वस्मात्पाप्मनो निर्मुच्यते ॥ ४७ ॥

---

" अवभृथ ! निचुम्पुण, निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतम् । पुरुराव्णो देव रिषस्पाहि "–( वा. ३, ४८ ) इति। कामं हैते यस्मै कामयेत तस्मै दद्यात् । न हि दीक्षितवसने भवतः । स यथाऽहिस्त्वचो निर्मुच्येतैवं सर्वस्मात् पाप्मनो निर्मुच्यते ॥ ४७ ॥

( १८५ ) अथ केशश्मश्रूप्त्वा । समारोह्याग्नी ऽउदवसायेष्ट्येतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजत ऽउत्सन्नयज्ञ ऽइव वा ऽएष यच्चातुर्मास्यान्यथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत्पौर्णमासं तत्क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति तस्मादुदवस्यति ॥ ४८ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥४॥३॥(५।२)॥

---

अथ केशश्मश्रूप्त्वा समारोह्याग्नी उदवसायेष्ट्येतेन यजते । न हि तदवकल्पते—यदुत्तरवेदावग्निहोत्रं जुहुयात् । तस्मादुदवस्यति, गृहानित्वा, निर्मथ्याग्नी पौर्णमासेन यजते । उत्सन्नयज्ञ इव वा एषः—यच्चातुर्मास्यानि । अथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत् पौर्णमासम् । तत् क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति—तस्मादुदवस्यति ॥ ४८ ॥ इति वरुणप्रघासयागश्चातुर्मास्ये द्वितीयं पर्व ॥

---

अस्तु प्रक्षिपामीत्यर्थः । "षो अन्तकर्मणि"—(धा. पा. अ. ४ ३९) इत्यस्माल्लुङि "यमरमनमाताम्"—(पा. सू. ७। २। ७३) इति सगिटौ । तथा मर्त्ये मनुष्ये अन्तिकस्थे 'मर्त्यकृतं' मनुष्यविषयं यत् एनः पापम्, यदपि 'अवयाजिनम्' हे 'देव' स्वामिन् ! अवभृथ ! 'पुरुत्रा' पुरुत्रासवरादिभ्यो बहुविषयत्वदोषकारणात् । दैवरोगादिभ्योऽनिष्टाप्तेः—(उ. ४ पा. २४१ सू.) । यद्वा, "रा दाने"—(धा. पा. अ. प. ४७) इत्यस्मात् "आतो मनिन्-क्वनिप्-वनिपश्च"—(पा. सू. ३। २। ७४) इति वनिप् । पुरु बहुलं समाहृत्य राति ददातीति पुरुत्रावा, तस्मात् इन्द्रियसंहिंस्कात् वरुणपाशात्मकपापात्, पापात् अस्मान् पाहीति । एवमनेन मन्त्रेण क्षामवत्यग्नौ हविः शेषं आपादानं जुहुत । तदुक्तं सूत्रकारेण—"अपादानं क्षामोऽसमन्तादस्येति पृष्ठे धावन"—(का. श्रौ. सू. ५।५।२१-२२) इति । पूर्ववदोर्वसनोर्वासः त्रिविधम्—कार्यमिति । स्नानानन्तरमन्यत् वासो परिदधाति । पूर्वपरिहितं निषिद्धम्, "न दीक्षितवसनं परिदधीत"—इति श्रुतेः । एतदेव प्रशंसति—स यथेति । 'यथा' खलु 'अहिस्त्वचो निर्मुच्येत,' 'एवम्' पूर्वपरिहितवाससो हित्वा सर्वस्मात् पापादेव यजमानो निर्मुच्यते ॥ ४७ ॥

अवभृथस्नानानन्तरं केशश्मश्रुवपनं विधत्ते—अथेति । केशांश्च श्मश्रूणि च 'केशश्मश्रु' प्राण्यङ्गत्वादेकवद्भावः । 'उप्त्वा' वापयित्वेत्यर्थः । समारोहणानन्तरं गृहे प्रत्यागमनं विधत्ते—समारोह्येति । 'अग्नी' गार्हपत्याहवनीयौ । एतेन यजते इति । वरुणप्रघासाख्येन यागेनेत्यर्थः । न हि तदिति । वरुणप्रघासनिमित्तायामुत्तरवेद्यां 'यत्' अग्निहोत्रहवनम्, न तत् युज्यत इत्यर्थः । यस्मादेवं तस्मात् कारणात् वरुणप्रघासस्थानादुदवसानं कर्तव्यमिति निगमयति—तस्मादिति । समारोहणानन्तरं तस्मात्स्थानादभिनिष्क्रम्य 'गृहान्' 'इत्वा' गत्वा, 'निर्मथ्य' तत्र 'पौर्णमासेन' यागेन 'यजेत' । एतदुक्तमुपपत्तिहेतुना स्तौति—उत्सन्नयज्ञ इत्यादिना ।

---

१—पूर्वं दक्षिणतः नि...त्यो क्षामा इत्येवं का. श्रौ. सू. ५।१४७। [illegible] इत्यर्थः । २—अन्ये वाससी परिदधति । का. श्रौ. सू. ५। १४२। द्वितीयम् अवगाहा । ३—केशश्मश्रूणि [illegible] वा [illegible] । का. श्रौ. सू. ५।१६८। ४—एतेषु पौर्णमास... [illegible] । का. श्रौ. सू. ५। १४।

वरुणप्रघासैर्वै प्रजापतिः । प्रजा वरुणपाशात्प्रामुञ्चत्ताऽअनमीवाऽअकिल्बिषाः प्रजाः प्राजायन्ताथैतैः साकमेधैरेतैर्वै देवा वृत्रमघ्नन्नेतैरेव व्यजयन्त येयमेषां विजितिस्तां तथोऽएवैषऽएतैः पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति तथोऽएव विजयते तस्माद्वाऽएष एतैश्चतुर्थे मासि यजेत स वै त्र्यहमनूचीनाहं यजते ॥ १ ॥

## अथ साकमेधपर्व ।

वरुणप्रघासैर्वै प्रजापतिः प्रजा वरुणपाशात् प्रामुञ्चत् । ता अनमीवा अकिल्बिषाः प्रजाः प्राजायन्त । अथैतैः साकमेधैः । एतैर्वै देवा वृत्रमघ्नन् । एतैरेव व्यजयन्त । येयमेषां विजितिः ताम् । तथो एवैष एतैः पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति, तथो एव विजयते—तस्माद्वा एष एतैश्चतुर्थे मासि यजेत । स वै त्र्यहमनूचीनाहं यजते ॥ १ ॥

दर्शपूर्णमासचातुर्मास्यानामनुष्ठानप्राचुर्याभावादुत्सन्नयज्ञत्वम् । अतस्तेषामप्रतिष्ठाहेतुत्वेन तदनुष्ठाने यजमानस्यापि अप्रतिष्ठा सम्भाव्येत; अतः तस्य प्रतिष्ठार्थं स्वत्र प्रतिष्ठितः पौर्णमासयागः सम्पद्यत इत्यर्थः । तस्मादुदवस्यतीति । वरुणप्रघासदेशान्निष्क्रमणविधेर्निगमनम् ॥ ४८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ ( २–१–२ )

अथ साकमेधाख्यस्य विधित्सितस्य तृतीयस्य पर्वणः पापरूपशत्रुजयहेतुत्वं वक्तुं वृत्तान्तं सङ्कीर्तयति—वरुणप्रघासैरिति ।[1] 'अनमीवाः' रोगरहिताः 'अकिल्बिषाः' तन्निदानभूतपापरहिताः । अथैतैरिति । वरुणप्रघासानन्तरमनुष्ठेयैः 'एतैः' विधित्सितैः 'साकमेधैः' प्रजापतिः ता एव प्रजा विजितपापा अकरोत् । एतेषां विजयहेतुत्वमाख्यायिकया प्रतिपादयति—एतैर्वा इति । 'वृत्रम्' आवरणशीलम्, एतन्नामानमसुरमित्यर्थः । येयमेषामिति । 'एषां' देवानां वृत्रहननकर्मणा 'येयं' 'विजितिः' विजयो विद्यते व्यजयन्तेति सम्बन्धः । अथाध्येषां तत्फलसाधनत्वमाह—तथो एवैष इति । 'द्विषन्तं' द्वेषणशीलमनर्थकारणं पापरूपं 'भ्रातृव्यं' शत्रुमिति सामानाधिकरण्येन सम्बन्धः । तथो एव विजयत इति । तथा हतः पापशत्रुः, तत्सजातीयस्यापि निवृत्त्या सर्वत्र साकमेधयाजिनो विजय एव, न कुत्रचित् प्रतिहतिरित्यर्थः । उक्तमर्थं हेतुतया इदानीं विधत्ते—तस्मादिति । यस्मात् एतत्फलहेतवः साकमेधाः 'तस्मात्' 'एषः' वरुणप्रघासैरिष्टवान् पुनः 'चतुर्थे मासि' 'एतैः' साकमेधैर्यजेत । अनीकवत्यादीनां साकमेधगतानामिष्टीनां बहुत्वादेतैरिति बहुवचनम् । अहर्द्वयसाध्यत्वं विधत्ते—स वा इति । द्वयोरह्नोः समाहारो द्व्यहः "तद्धितार्थ"—( पा. सू. २ । १ । ५१ ) इति समासे "न सङ्ख्यादेः समाहारे"—( पा. सू. ५ । ४ । ८९ ) इति अह्नादेशस्य प्रतिषेधः—अनूची-

१–'अप्रतिष्ठत्वेन' इति पा. । २–आषाढ्यामथ ते वा योनिरेति समारोप्याऽऽहवनीय निर्मथ्य वरुणप्रघासाः । का. श्रौ. सू. ५ । १७५ । आ. श्रौ. सू. ८ । ५–८ क. १२६ सूत्राणि चेह द्रष्टव्यानि । ३–'नि. सन्नमायत्वात्'–इ० पा० ।

स पूर्वेद्युः । ( १ ) अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपत्यग्निर्ह वै देवा ऽअनीकं कृत्वोपप्रेयुर्वृत्रᳬहनिष्यन्तः ॥ तेजोऽग्निर्नात्यथत तथो ऽएवैष ऽएतत्पाप्मानं द्विषन्तं भ्रातृव्यᳬहनिष्यन्नग्निमेवानीकं कृत्वोपप्रैति स तेजोऽग्निर्न व्यथते तस्मादग्नयेऽनीकवते ॥ २ ॥

( तेऽथ ) अथ मरुद्भ्यः सान्तपनेभ्यः । ( भ्यो ) मध्यन्दिने चरुं निर्वपति मरुतो ह वै सान्तपना मध्यन्दिने वृत्रᳬ सन्तेपुः स सन्तप्तोऽनन्नेव प्राणन्परिदीर्णः शिश्ये तथोऽएवैतस्य पाप्मानं द्विषन्तं भ्रातृव्यं मरुतः सान्तपनाः सन्तपन्ति तस्मान्मरुद्भ्यः सान्तपनेभ्यः ॥ ३ ॥

---

( १ ) स पूर्वेद्युः अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपति । अग्निं ह वै देवा अनीकं कृत्वोपप्रेयुः वृत्रं हनिष्यन्तः । स तेजोऽग्निर्नात्यथत । तथो एवैष एतत्पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्नग्निमेवानीकं कृत्वोपप्रैति । स तेजोऽग्निर्न व्यथते । तस्मादग्नयेऽनीकवते ॥ २ ॥

( २ ) अथ मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं निर्वपति । मरुतो ह वै सान्तपना मध्यन्दिने वृत्रं सन्तेपुः । स सन्तप्तोऽनन्नेव प्राणन् परिदीर्णः शिश्ये । तथो एवैतस्य पाप्मानं द्विषन्तं भ्रातृव्यं मरुतः सान्तपनाः सन्तपन्ति । तस्मान्मरुद्भ्यः सान्तपनेभ्यः ॥ ३ ॥

---

नाहमिति । अनु सम्यगञ्चतीत्यनुक् अन्वगेवानूचीनम्, " विभाषाऽञ्चेरदिक्स्त्रियाम् "–(पा सू. ५ । ४ । ८) इति स्वार्थिकः खञ्–प्रत्ययः । अनूचीनं नैरन्तर्येण वर्तमानमहः अनूचीनाहम्, " राजाहःसखिभ्यः "–(पा सू. ५ । ४ । ९१ ) इति टच् समासान्तः ॥ १ ॥

तत्र पूर्वदिवसे प्रातर्मध्याह्नसायाह्नेषु तिस्र इष्टयोऽनुष्ठेयाः, तत्र प्रथमां विधाय स्तौति–स पूर्वेद्युरित्यादिना । " सद्यः परुत् "(पा सू. ५ । ३ । २२)इत्यादिसूत्रेण पूर्वदिनशब्दस्य पूर्वेद्युरिति निपातः । साकमेधेषु प्रधानभूता महाहविराख्या इष्टिर्यस्मिन् दिवसेऽनुष्ठीयते, तत्र पूर्वदिवसे वर्तमानायाः प्रातःकालेऽनीकगुणविशिष्टायाग्नयेऽष्टाकपालेषु संस्कृतं पुरोडाशं निर्वपेदित्यर्थः । अनीकं कृत्वेति । प्रमुखं कृत्वेत्यर्थः । स तेज इति । स च तेजोरूपोऽग्निः शत्रुहननाद्भयकारणात् ' नात्यथत ' व्यथां न प्राप्तवान् । दार्ष्टान्तिके योजयति–तथो एवैष इति । उक्तहेतोरनीकवद्गुणविशिष्टपुरोडाशदेवताया अग्नेर्युक्तमिति निगमयति–तस्मादिति ॥ २ ॥

मध्यन्दिनेऽनुष्ठेयामिष्टिं विधाय प्रशंसति–अथेति । देवताविशेषणमुपपादयति–मरुतो ह वा इति । ' मरुतो ' हि सन्तापनकारणात् ' सान्तपनाः ' तथाविधा मरुतो मध्यन्दिनसमये ' वृत्रम् ' असुरं ' सन्तेपुः ' सन्तप्तं कृतवन्तः । स ॥ सन्तप्तः सन् श्वासप्रश्वासौ कुर्वन् ' परिदीर्णः ' विदारितसर्वावयवः ' शिश्ये ' शयनं कृतवान् । तथो एवेति, दार्ष्टान्तिककथनम् ॥ ३ ॥

---

१–पूर्वेद्युः पूर्वेऽग्नयेऽनीकवते पुरोडाशः । का श्रौ सू. ५।३४।१२–मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुः । का श्रौ सू. ५।१५–

( म्यो॰ ) अथ मरुद्भ्यो गृहमेधिभ्यः शालया वत्सानपाकृत्य पवित्रवति सन्दोह्य तं चरुं श्रपयति चरुर्ह्येव स यत्र क्व च तण्डुलानावपन्ति तन्मेधो देवा दधिरे प्रातर्वृत्रं हनिष्यन्तस्तथो एवैष एतत्पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्मेधो धत्ते तत्क्षीरौदनो भवति मेधो वै पयो मेधस्तण्डुलास्तदुभयं मेधमात्मन्धत्ते तस्मात्क्षीरौदनो भवति ॥ ४ ॥

तस्यावृत् । ( त्से ) सैव स्तीर्णा वेदिर्भवति या मरुद्भ्यः सान्तपनेभ्यस्तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधाति तथा सन्दोह्य चरुं श्रपयति श्रपयित्वाऽभिघार्योद्वासयति ॥ ५ ॥

---

( ४ ) अथ मरुद्भ्यो गृहमेधिभ्यः शालया वत्सानपाकृत्य पवित्रवति सन्दोह्य तं चरुं श्रपयति । चरुरु ह्येव सः—यत्र क्वचन तण्डुलानावपन्ति । तन्मेधो देवा दधिरे—प्रातर्वृत्रं हनिष्यन्तः । तथो एवैष एतत्पाप्मानं द्विषन्तं भ्रातृव्यं हनिष्यन्मेधो धत्ते । तत्क्षीरौदनो भवति । मेधो वै पयः, मेधस्तण्डुलाः । तदुभयं मेधमात्मन्धत्ते । तस्मात् क्षीरौदनो भवति ॥ ४ ॥

तस्यावृत् सैव स्तीर्णा वेदिर्भवति—या मरुद्भ्यः सान्तपनेभ्यः । तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधाति । तथा सन्दोह्य, चरुं श्रपयति । श्रपयित्वाऽभिघार्योद्वासयति ॥ ५ ॥

---

सायाह्ने कर्तव्यामिष्टिं विधत्ते—अथेति । गृहमेधित्वगुणविशिष्टेभ्यो 'मरुद्भ्यः' 'चरुं श्रपयति'—इत्युत्तरेणान्वयः । श्रपणप्रकारमाह—शालयेति । दर्शयागवत् शाखाहरणवत्सापाकरणे कृत्वा, शाखापवित्रं निर्माय, तदपि पात्रे गाः 'सन्दोह्य' दुग्ध्वा, 'तम्' इति ( विधेयापेक्षया ) निर्देशः । 'तं' दुग्धं पयः चरुं 'श्रपयति' चरुरु ह्येवेति । 'सः' वै मरुद्भ्यो गृहमेधिभ्यः कृतः 'चरुः एव हि' ओदनः तद्धु, अत इदानीमपि तद्वत् चरुरेव श्रपयितव्य इत्यर्थः ॥

यत्र क्वचेति । यत्र कुत्रचिदवस्थितान् तण्डुलान् आहृत्य, तस्मिन् पयसि प्रक्षिप्ते तत् तथैव हि देवाः पुरुषादिभ्योऽपक्रम्य व्रीहिषु संक्रान्ताः 'मेधः' सारं 'दधिरे' अधारयन् । तत्र कारणमाह—प्रातरिति । हनिष्यन्त इति । इतो लृट्प्रत्ययः । प्रातः करिष्यमाणाद् वृत्रहननादेतोरित्यर्थः । तथो एवेति । इदानीन्तनयजमानस्यापि तथैव प्रतिपादनम् । क्षीरौदन इति । पयसि तण्डुलान् प्रक्षिप्य श्रपणे सति क्षीरेण संस्कृत ओदनो निष्पन्नः "अन्नेन व्यञ्जनम्"—( पा. सू. २ । १ । ३४ ) इति तृतीयासमासः । द्रव्यद्वयं सम्भूय प्रशंसति—मेधो वा इति । मेधः सारांशो मेधशब्दार्थः । स्पष्टमन्यत् ॥

एष च गृहमेधीययागः सान्नाय्यविकृतिरिति सामिधेन्यः पूर्ववत् सम्भृत्य ततो वैकङ्कतोदनादिनि दशान्तानि दर्शयति । कात्यायनोऽप्याह स्म—"मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि, सान्नाय्यवत्, तूष्णीं वैकङ्कतोदनात्"—( का. श्रौ. सू. ५ । १९२–१९६ ) इति ॥ ४ ॥

अतोऽत्र कर्तव्यान्यङ्गान्यनुक्रामति—तस्यावृदिति । 'तस्य' गृहमेधीययागस्य 'आवृत्' क्रिया, प्रयोगः,

---

१–द्रष्टव्ये तस्मिन्नपि निधाय मरुद्भ्यो गृहमेधिभ्यः सायं चरुः भवति । का. श्रौ. सू. ५।१५१ । तत्र सायंशब्दोऽपराह्णवाची । इति कर्कः ।

( त्य ) अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति । तयोरेनं द्वेधोद्धरन्ति तयोर्मध्ये सर्पिरासेचने कृत्वा सर्पिरासिञ्चति स्रुवं च स्रुचं च सम्मार्ष्ट्यथै-ताऽओदनावादायोदेति स्रुवं च स्रुचं चाऽऽदायोदेति स ऽइमामेव स्तीर्णां वेदिमभिमृश्य परिधीन्परिधाय यावतः शकलान्कामयते तावतोऽभ्या-दधात्यथैता ऽओदनावासादयति स्रुवं च स्रुचं चासादयत्युपविशति होता होतृषदने स्रुवं च स्रुचं चाऽऽदान ऽआह ॥ ६ ॥

अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति । तयोरेन द्वेधोद्धरन्ति । तयोर्मध्ये सर्पिरासेचने कृत्वा सर्पिरासिञ्चति । स्रुव च स्रुच च सम्मार्ष्टि । अथैतौ ओदनावादायोदेति । स्रुव च स्रुच चादायो-देति । स इमामेव स्तीर्णां वेदिमभिमृश्य, परिधीन्परिधाय, यावतः शकलान् कामयते तावतो-ऽभ्यादधाति । अथैतौ ओदनावासादयति स्रुव च स्रुच चासादयति । उपविशति होता होतृषदने स्रुव च स्रुच चाददान आह ॥ ६ ॥

भ्रम, अभिधीयन इति शेष । मान्त्रवर्णो 'या यदि' बर्हिषा 'स्तीर्णा' अभूत्, गृहमेधीयस्यापि 'नैव उपकरोति । तस्यामेवस्यादि, सिद्धसिद्धम् अत सन्दिग्धपदविवरणमात्रमेव क्रियते–शकलाधेति । इध्मस्य स्थाने शकलानेव सम्भृत्य परिधिभि सह तान् सादयन्नित्यर्थ । सन्दोह्य चरमिति । विहितानुवाद कर्मार्थ ॥५

अथ द्वे इति । पिशीले वेति । पिशीलशब्द शरावबाची । अत एवोक्त सूत्रकृता–"अपनिलाऽभिघार्यो-द्धास्य शरावयोरुद्धरति" ( का श्रौ सू ५।१।१७ ) । पात्र्यौ वेति । निर्णेनिजतीति । प्रक्षालयतीत्यर्थ । "णिजिर् शौचपोषणयो"–इति धातु ( धा पा जु अ. ११ ) । द्वेधोद्धरन्तीति । 'एन' चरु द्वेधा विभज्य तयो शरावयो पात्र्योर्वा निदध्यादित्यर्थ । सर्पिरासेचने इति । सर्पि सर्पणशील-माज्यम्, आसिच्यते आनीयतेऽस्मिन्निति सर्पिरासेचनम् । अधिकरणे ल्युट् । पात्रद्वयगतयोरोदनयोर्मध्ये सर्पि पूरणाय गर्तौ कृत्वेत्यर्थ । स्रुवं चेति । एकत्वमविवक्षितम् । प्रयाजानुयाजाभावेनोपभृत प्रयोजना-भावात् तामेव सम्मृज्यादित्यर्थ । ओदनावासादयतीति । पात्रद्वये स्थापितौ तावोदनौ गृहीत्वा वेद्यामासादयितु गच्छेदित्यर्थ । ओदनमध्यस्थितेनैवाज्येन कृत्वा नवमिनिष्पत्त स्रुवादा अपप्रयोग इति ग्रहण इत्यर्थ । इमामेवेति । सान्तपनीयेष्टौ या वेदि बर्हिषाऽऽस्तीर्णाऽऽसीत्, तामेव वेदिम् गृहमेधीयाय पुन-स्तरणमन्त्रेण तूष्णीमेवाभिमृशेत । यदाह कात्यायन –"स्तरण्यनुषा वेदिमभिमृश्य तूष्णीं वा कृतत्वात् "– ( का. श्रौ. सू ५।१।१८ ) इति । न पुनर्बर्हिषाऽऽस्तरण कर्त्तव्यमित्यर्थ । इध्मवत्त कार्यशकलानां सङ्ख्या नियमप्रसक्त्याह–यावत इति । यावद्भि शकलैराहवनीयस्य प्रज्वलन भवति तावतः कामयेत, 'तावत' शकलानत्राभ्यादध्यादित्यर्थ । तस्या वेद्या हविरासादन विधत्ते–अथैताविति । उपविशति होतेति । सामिधेन्य-नुवचनादभावात् होतृषदने तूष्णीमेवोपविशेत् । होतुरुपवेशनानन्तरमाज्यभागावित्येव कर्त्तव्यम्, न पुन-राघारादिकमित्यभिप्रेत्याह–स्रुवश्च स्रुचश्चेत्यादिना ॥ ६ ॥

१–इध्मस्थाने शकलपरिधि निधाय । का. श्रौ.सू ५।१।५३। २–आसेचने मध्ये कृत्वा सर्पिरासिञ्चनादयर्थम् । का.श्रौ.सू ५।१।५८।

( ह्रा ) अग्नयेऽनुब्रूहीति । ( त्या ) आग्नेयमाज्यभागᳪं स दक्षिणस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याहाग्निं यजेति वषट्कृते जुहोति ॥ ७ ॥

( त्य ) अथाह सोमायानुब्रूहीति । सौम्यमाज्यभागᳪं स उत्तरस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याह सोमं यजेति वषट्कृते जुहोति ॥ ८ ॥

( त्य ) अथाह मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहीति । स दक्षिणस्यौदनस्य सर्पिरासेचनात्तत आज्यमुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्यतिक्रामत्यतिक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति वषट्कृते जुहोति ॥ ९ ॥

( त्य ) अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । स उत्तरस्यौदनस्य सर्पिरासेचनात्तत आज्यमुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघार-

---

'अग्नयेऽनुब्रूहि' इति आग्नेयमाज्यभागम् । स दक्षिणस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामति । अतिक्रम्याश्राव्याह ' अग्निं यज ' इति । वषट्कृते जुहोति ॥ ७ ॥

अथाह—'सोमायानुब्रूहि' इति सौम्यमाज्यभागम् । स उत्तरस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामति । अतिक्रम्याश्राव्याह—'सोमं यज' इति । वषट्कृते जुहोति ॥ ८ ॥

अथाह—'मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहि' इति । स दक्षिणस्यौदनस्य सर्पिरासेचनात्तत आज्यमुपस्तृणीते । तस्य द्विरवद्यति । अथोपरिष्टादाज्यस्याभिघारयति । अतिक्रामति । अतिक्रम्याश्राव्याह—'मरुतो गृहमेधिनो यज' इति । वषट्कृते जुहोति ॥ ९ ॥

अथाह—'अग्नये स्विष्टकृतेऽनुब्रूहि ' इति । स उत्तरस्यौदनस्य सर्पिरासेचनात्तत आज्यमुपस्तृणीते । तस्य द्विरवद्यति । अथोपरिष्टादाज्यस्याभिघारयति । अतिक्रामति । अतिक्रम्याश्राव्याह—

---

अग्नयेऽनुब्रूहीति । दक्षिणस्यौदनस्येति । दक्षिणोत्तरभागेन वेद्यामासादितयोरोदनयोः यो दक्षिणस्थित ओदनः, तस्य 'सर्पिरासेचनात्' सर्पिषः पूर्णात् पात्रात् पूर्वाज्यभागार्थं चतुरवदानम्, उत्तरस्यौदनस्य सर्पिरासेचनात् द्वितीयस्याज्यभागस्यावदानम् । तथा प्रधानयागस्य गृहमेधीयस्य दक्षिणौदनस्य सर्पिरासेचनात् उपस्तरणाभिघारणे उत्तरौदनस्य सर्पिरासेचनात् स्विष्टकृद्यागस्योपस्तरणाभिघारणे । अत एव सूत्रितं कात्यायनेन— "आज्यभागाभ्यां चरति, आग्नेयं दक्षिणात्, सौम्यमुत्तरात्, गृहमेधीयस्विष्टकृतौ चाज्यभागवत् समवदानौ ( ९ । १६३–१६४) इति । निगदसिद्धमन्यत् ॥ ७ ॥ ८ ॥ ९ ॥

अथाहाग्नय इति । न प्राशित्रमिति । प्राशित्रावदानं न कर्त्तव्यम्, पयसि सक्तुत्वेन साकाम्यविकृतित्वात्[1],

---

१—न प्राशित्रमिडात भवति । का. श्रौ. सू. ९ । १६८ ।

यत्युतिक्रामत्यतिक्रम्याश्राव्याहाग्निँ स्विष्टकृतं यजेति वषट्कृते जुहोत्यथेडामेवावद्यति न प्राशित्रमुपहूय मार्जयन्त ऽएतन्न्वेकमयनम् ॥ १० ॥

( ५ ) अथेदं द्वितीयम् । सैव स्तीर्णा वेदिर्भवति या मरुद्भ्यः सान्तपनेभ्यस्तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधाति तथा सन्दोह्य चरुँ श्रपयति तदेव प्रतिवेशमाज्यमधिश्रयति श्रपयित्वाऽभिघार्योद्वास्यानक्ति स्थाल्यामाज्यमुद्वासयति स्रुवं च स्रुचं च सम्मार्ष्ट्यथैतँ सोखमेव चरुमादायोदैति स्थाल्यामाज्यमादायोदैति स्रुवं च स्रुचं चादायोदैति स ऽइमामेव स्तीर्णां वेदिमभिमृश्य परिधीन्परिधाय यावतः शकलान्कामयते तावतोऽभ्यादधात्यथैतँ सोखमेव चरुमासादयति स्थाल्यामाज्यमासादयति स्रुवं च स्रुचं चासादयत्युपविशति होता होतृषदने स्रुवं च स्रुचं चाददान ऽआह ॥ ११ ॥

---

' अग्निं स्विष्टकृत यज ' इति । वषट्कृते जुहोति । अथेडामेवावद्यति, न प्राशित्रम् । उपहूय, मार्जयन्ते । एतन्न्वेकमयनम् ॥ १० ॥

अथेदं द्वितीयम् । सैव स्तीर्णा वेदिर्भवति—या मरुद्भ्यः सान्तपनेभ्यः । तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधाति । तथा सन्दोह्य चरु श्रपयति नेदेव प्रतिवेशमाज्यमधिश्रयति । श्रपयित्वाऽभिघार्योद्वास्यानक्ति स्थाल्यामाज्यमुद्वासयति स्रुवं च स्रुचं च सम्मार्ष्टि । अथैतं सोखमेव चरुमादायोदैति । स्थाल्यामाज्यमादायोदैति । स्रुवं च स्रुचं चादायोदैति । स इमामेव स्तीर्णां वेदिमभिमृश्य, परिधीन्परिधाय, यावतः शकलान् कामयते तावतोऽभ्यादधाति । अथैतं सोखमेव चरुमासादयति । स्थाल्यामाज्यमासादयति । स्रुवं च स्रुचं चासादयति । उपविशति होता होतृषदने । स्रुवं च स्रुचं चाददान आह ॥ ११ ॥

---

न हि प्रकृतौ सान्नाय्यस्य प्राशित्रमवदायते । उक्तमुपयोगक्रमं निगमयति—एतन्न्विति । ' एतत् ' खलु ' एकमयन ' गृहमेधीयस्यानुष्ठानमार्गः ॥ १० ॥

अन्यदप्ययनं दर्शयति—अथेदमिति । अस्मिन् पक्षेऽपि पूर्ववदेव सैव स्तीर्णा वेदिर्भवतीत्यादेरर्थः । एतावांस्तु विशेषः—अग्निमथ्य चरोर्देशोद्धरणम्, तत्र सर्पिरासेचनकरणम्, तदामेचनश्चोत्पत्त्यैव न भवति, किन्तु यदा चरुं श्रपयति ' तत् ' तदानीमेव ' प्रतिवेशं ' समीपनार्थं प्रतिनिविष्टेन निवेशनस्थाने प्रतिवेशं, तत्स्थानीयमाज्यम्, दक्षिणाग्नावाज्यस्थालीमधिश्रयेदित्यर्थः । उद्वास्यानक्तीति । उद्वासनात् पूर्वमभिघार्य तदुत्तरकालमपि हविरञ्ज्यादित्यर्थः ॥

सोखमेवेति । यस्यां स्थाल्यां चरु श्रप्यते, तत्सहितमेव, न पुनः पात्रान्तरे धारणं कर्तव्यमित्यर्थः । स्थाल्या-

( ह्रा ) अग्नयेऽनुब्रूहीति । ( त्या ) आग्नेयमाज्यभागꣳ स स्थाल्यै चतु-
रज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याहाग्निं यजेति वषट्कृते जुहोति १२
( त्यु ) अथाह सोमायानुब्रूहीति । सौम्यमाज्यभागꣳ स स्थाल्या एव
चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याह सोमं यजेति वषट्-
कृते जुहोति ॥ १३ ॥
( त्यु ) अथाह मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहीति । स उपस्तृणीत आज्य-
मथास्य चरोर्द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदाने ऽ-
अतिक्रामत्यतिक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति वषट्कृते जुहोति १४
( त्यु ) अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । स उपस्तृणीत आज्यमथास्य
चरोः सकृदवद्यत्यथोपरिष्टाद्द्विराज्यस्याभिघारयति न प्रत्यनक्त्यवदान-
मतिक्रामत्यतिक्रम्याश्राव्याहाग्निꣳ स्विष्टकृतं यजेति वषट्कृते जुहोति १५
( त्यु ) अथेडामेवावद्यति न प्राशित्रम् । ( सु ) उपहूय प्राश्नन्ति यावन्तो
गृह्या हविरुच्छिष्टाशाः स्युस्तावन्तः प्राश्नीयुरथो ऽप्यृत्विजः प्राश्नीयु-

---

'अग्नयेऽनुब्रूहि' इति आग्नेयमाज्यभागम् । स स्थाल्यै चतुराज्यस्यावदायातिक्रामति । अति-क्रम्याश्राव्याह—'अग्निं यज' इति । वषट्कृते जुहोति ॥ १२ ॥

अथाह—'सोमायानुब्रूहि' इति । सौम्यमाज्यभागम् । स स्थाल्या एव चतुराज्यस्यावदायाति-क्रामति । अतिक्रम्याश्राव्याह—'सोमं यज' इति । वषट्कृते जुहोति ॥ १३ ॥

अथाह—'मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहि' इति । स उपस्तृणीत आज्यम् । अथास्य चरोर्द्विर-वद्यति । अथोपरिष्टादाज्यस्याभिघारयति । प्रत्यनक्त्यवदाने अतिक्रामति । अतिक्रम्याश्राव्याह—'मरुतो गृहमेधिनो यज' इति । वषट्कृते जुहोति ॥ १४ ॥

अथाह—'अग्नये स्विष्टकृतेऽनुब्रूहि' इति । स उपस्तृणीत आज्यम् । अथास्य चरोः सकृदव-द्यति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति । न प्रत्यनक्त्यवदानम् । अतिक्रामति । अतिक्रम्या-श्राव्याह—'अग्निं स्विष्टकृतं यज' इति । वषट्कृते जुहोति ॥ १५ ॥

अथेडामेवावद्यति, न प्राशित्रम् । उपहूय प्राश्नन्ति । यावन्तो गृह्या हविरुच्छिष्टाशाः स्युः—तावन्तः प्राश्नीयुः—अथो अप्यृत्विजः प्राश्नीयुः । अथो अप्यन्ये ब्राह्मणाः प्राश्नीयुः—यदि बहुरोदनः

---

माज्यमिति । स्थालीसहितमेव चरुं वेद्यामासाद्य, आज्यस्थालीतलगतमाज्यमप्यासादयेदित्यर्थः । आज्यभागादिषु यदाज्यकार्यं तत् सर्वं स्थालीगतादाज्यादेव कर्त्तव्यमिति । अयमेव पूर्वस्मात्पक्षादस्य पक्षस्य विशेषः, शिष्टं समानं पूर्वेण ॥ ११—१९ ॥

अथेडामेवावद्यतीति । इडोपहानानन्तरं यत् प्राशनम्, तत्र विशेषमाह—यावन्त इति । गृहे भवा 'गृह्याः'

